गाददृष्टकल्पनावैफल्यम् । तं प्रत्युपसर्पणवत्त्वादिति हेतुश्च सव्यभिचारः । अदृष्टान्तरात्तस्य तं प्रत्युपसर्पणेऽनवस्था । तस्याप्यदृष्टान्तरात्तं प्रत्युपसर्पणप्रसंगात । अथ देशान्तरवर्तिपश्वादिसंयुक्तात्मप्रदेशस्थमेव तत्तेषां तं प्रत्युपसर्पणहेतु । नैवमन्यत्र प्रयत्नादौ गुणे तथानभ्युपगमात् । न खलु प्रयत्नो ग्रासादिसंयुक्तात्मप्रदेशस्थ एव ग्रासादेर्देवदत्तमुखं प्रत्युपसर्पणहेतु । अन्तरालप्रयत्नवैफल्यप्रसंगात् । अथ प्रयत्नवैचित्र्यदृष्टेरदृष्टेऽप्यन्यथाकल्पनम । तथा हि— कश्चित्प्रयत्नः स्वयमपरापरदेशवानपरत्र क्रियाहेतुः । यथानन्तरोदितोऽपरश्चान्यथा यथाशरासनाद्यासस्थानसंयुक्तात्मप्रदेशस्थ एव शरादीनां लक्षप्रदेशप्राप्तिक्रियाहेतुरिति चेत् । तर्हीयं विचित्रता पश्वादिसमाकर्षणहेतुभूतगुणानां स्वाश्रयसंयुक्तासंयुक्तपश्वाद्याकर्षणहेतुत्वेन किं नेष्यते । विचित्रशक्तित्वाद्भावानाम । तथा दर्शनाभावादिति न वाच्यम । अयस्कान्तस्पर्शगुणस्य स्वाश्रयासंयुक्तलोहद्रव्ये प्रत्याकर्षणदर्शनात् । अथात्र द्रव्यमाकर्षणकारणं न स्पर्शगुणो द्रव्यरहितस्य तस्याकृष्टिहेतुत्वादर्शनात । एवं तर्हि तत एव प्रयत्नस्यापि न ग्रासाद्याकर्षणनिमित्तता स्यात् । तथा च ग्रासादिवदिति दृष्टान्तः साध्यविकलो भवेत । अथ द्रव्यस्य तत्र कारणत्वे प्रयत्नरहितस्यापि तत्प्रसक्तिरिति चेत । स्पर्शरहितस्यायस्कान्तस्यापि किं न तत्प्रसक्तिः। तद्रहितस्य तस्यादृष्टेर्नायं दोष इति चेत् । दृष्टिश्चेत्प्रमाणं तर्हि लोहद्रव्याकर्षणोत्पत्तावुभयं दृश्यत इत्युभयमपि तत्तत्र कारणमस्तु । विशेषाभावात् । तथा च तं प्रत्युपसर्पणवत्त्वादिति व्यभिचारी हेतुः । तृतीयपक्षेऽपि शब्दवदपरापरस्योत्पत्तावपरमदृष्टं कारणं तदुत्पत्तौ प्रसक्तं तत्राप्यपरमित्यनवस्था । अन्यथा शब्देऽपि किमदृष्टलक्षणनिमित्तपरिकल्पनया । अथ सर्वत्रादृष्टस्य वृत्तिस्तर्हि सर्वद्रव्यक्रियाहेतुत्वम । यददृष्टं तद्द्रव्यमुत्पादयति । तत्तत्रैव क्रियामुपरचयतीत्यभ्युपगमे शरीरारम्भकेषु परमाणुषु क्रिया न स्यादिति प्रागेवोक्तम ।

किं च । यथा तद्विशेषगुणेन प्रयत्नाख्येन समाकृष्टास्तं प्रत्युपसर्पन्तो ग्रासादयः समुपलभ्यन्ते तथा नयनाञ्जनादिद्रव्यविशेषेणापि समाकृष्टाः स्त्र्यादयस्तं प्रत्युपसर्पन्तः समुपलभ्यन्त एव । ततः किं प्रयत्नसधर्मणा केनचिदाकृष्टाः पश्वादय उत नयनाञ्जनादिसधर्मणेति ५ संदेहः । शक्यं ह्येवमनुमानं रचयितुं परेणापि, नयनाञ्जनादिसधर्मणा, विवादगोचरचारिणः पश्वादयः समाकृष्टा देवदत्तं प्रत्युपसर्पन्ति तं प्रत्युपसर्पणवत्त्वाद्वनितादिवत् । अथ तदभावेऽपि प्रयत्नादप्युपसर्पणदृष्टेरनैकान्तिकत्वमस्य प्रयत्नसधर्मणो गुणस्याभावेऽप्यञ्जनादेरपि तद्दृष्टेस्त्वदीयहेतोरपि किं नानैकान्तिकत्वम् । अथाञ्जनादावनुमीय- १० मानस्य प्रयत्नसधर्मणोऽदृष्टाख्यस्य हेतोः सद्भावादव्यभिचारो, अन्यत्राप्यञ्जनादिसधर्मणोऽनुमीयमानस्य सद्भावेनाव्यभिचार एव । तत्र प्रयत्नसामर्थ्याददृष्टस्य वैफल्येऽन्यत्राप्यञ्जनादिसामर्थ्यात्तद्वैफल्यं समानम् । अथाञ्जनादेरेव तद्धेतुत्वे सर्वस्याञ्जनादिमतः स्त्र्याद्याकर्षणप्रसक्तिः । न चाञ्जनादौ सत्यप्यविशिष्टे तद्वतः सर्वान्प्रति तदाक- १५ र्षणमवसीयते । ततो यद्वैकल्यात्तन्नाकृष्यते तदपि कारणं नाञ्जनादिमात्रमिति । तदेतत्प्रयत्नकारणेऽपि समानम् । न हि सर्वं प्रयत्नवन्तं प्रति ग्रासादय उपसर्पन्ति । तदपहारादिदर्शनात् । ततोऽत्राप्यन्यत्कारणमनुमीयताम् । अन्यथा न प्रकृतेऽप्यविशेषात् । ततः प्रयत्नवदञ्जनादेरपि तं प्रति तदाकर्षणहेतुत्वात्कथं न संदेहः । अञ्जनादेः २० स्त्र्याद्याकर्षणं प्रत्यकारणत्वेन तदर्थिनां तदुपादानं स्यात् । न च दृष्टसामर्थ्यस्याप्यञ्जनादेः कारणत्वाभावक्लृप्तिपरिहारेणान्यकारणत्वकल्पने भवतोऽनवस्थामुक्तिः । अथाञ्जनादिकमदृष्टसहकारि तत्कारणं न केवलमिति । नन्वेवं सिद्धम् । अदृष्टवदञ्जनादेरपि तत्र कारणत्वं ततः संदेह एव । किं ग्रासादिवत्प्रयत्नसधर्माकृष्टाः पश्वादयः किं वा २५ स्त्र्यादिवदञ्जनादिसधर्मणा देवदत्तसंयुक्तेन द्रव्येणेति संदिग्धं तं प्रत्युपसर्पणवत्त्वादित्येतत्साधनम् । सपरिस्पन्दात्मप्रदेशमन्तरेण ग्रासा-

द्याकर्षणहेतोः प्रयत्नस्यापि देवदत्तविशेषगुणस्य परं प्रत्यासिद्धत्वात् । साध्यविकलता चात्र दृष्टान्तस्य । एतेन देवदत्ताङ्गनाङ्गादिकमित्यपि प्रत्युक्तम् । उक्तदोषाणां तुल्यत्वात् । यत्तूक्तं ' अदृष्टं स्वाश्रयसंयुक्त आश्रयान्तरे कर्मारभते ' इत्यादि । तत्र हेतोः कालात्ययापदिष्टत्वम् । प्रत्यक्षबाधितपक्षानन्तरप्रयुक्तत्वात् । प्रत्यक्षेण हि देशान्तरवर्तिदेव- ५ दत्ताङ्गनाङ्गमणिमौक्तिकादिभिरसंयुक्त एवात्मानुभूयते । अथानेनैवानुमानेन प्रत्यक्षं बाधिष्यत इति कुतस्तत्रापि प्रकृतदोषावकाशः स्यात् । अथानन्यथासिद्धं तत्र प्रत्यक्षमिति तेनैवानुमानं बाध्यते । तर्हि प्रकृतेऽपि तदेवमेवेति तेनैवानुमानं बाध्यताम् । अथ तावत्यात्मप्रदेशे प्रत्यक्षप्रमासमवायात्तथा प्रतीतिः । नैवम् । आत्मनो निर्देशस्य त्वया १० स्वीकारात् । कल्पितत्वे तु प्रदेशस्य सर्वथा प्रतीत्युत्पत्तिरेव न स्यात् । कल्पिताग्नौ माणवके पावकादिवत् । न च समवायः प्रतीतौ कारणं कुम्भादावसमवेताया अपि प्रत्यक्षप्रमायास्तत्प्रत्यायकत्वात् । अथेन्द्रियार्थसन्निकर्षेण तद्विषयतया प्रत्यक्षप्रमोत्पादना कुम्भादिप्रतीतिः । नन्वेवं ब्रुवना त्वया स्वयमेव समवायस्य १५ प्रतीतौ कारणत्वमपन्हुतम् । किं च , एवमप्यात्मनः संनिकर्षेणात्मगोचरतया प्रत्यक्षप्रमोत्पादनात्कथं न व्याप्यात्मप्रतीतिर्जायते । ननु प्रदेशवृत्तिरेवात्ममनः संनिकर्ष इति तत्रैव तामुत्पादयितुमीशस्तर्हि कुम्भाद्यवयविन्यपि परिपूर्णप्रत्यक्षं मोत्पादि । सर्वं सार्विकया संनिकर्षस्य तत्राप्यभावात् । मध्यपरभागावस्थितावयविना नयन- २० रश्मीनां संयोगाभावात् । तस्मात्तावन्मात्रादेवात्मनस्तथा प्रत्यक्षोत्पत्तिरिति सिद्धं हेतोः कालात्ययापदिष्टत्वम् । विशेष्यासिद्धत्वं च । अदृष्टे पौद्गलिकत्वप्रतिपादकप्रमाणस्य वक्ष्यमाणत्वात् गुणत्वात् सिद्धेः । तेनैव च प्रमाणेन बाधितपक्षत्वादग्नेरूर्ध्वज्वलनमित्याद्यनुमानमपि नोत्थातुं शक्तम् । कार्यत्वे सति तदुपकारकत्वादितिहेतु- २५ श्चाञ्जनतिलकादिसामर्थ्यसमाकृष्यमाणकामिनीप्रमुखपदार्थैर्व्यभिचारी ।

देवदत्तविशेषगुणकारितमित्यत्र च विशेषशब्दस्य वैयर्थ्यम् । देवदत्तगुणकारितमित्येतावतैवादृष्टस्य क्रियाहेतुगुणत्वसिद्धेः । विशेषणासिद्धत्वं चास्य हेतोर्यत एकद्रव्यत्वमेकस्मिन्द्रव्ये समवायित्वमुच्यते । तच्चायुक्तम् । समवायस्य निषेत्स्यमानत्वात् । यत्तूक्तं
५ ' नाप्येकद्रव्यत्वमसिद्धमेकद्रव्यमदृष्टं विशेषगुणत्वाच्छब्दवत् ' इति तत्रादृष्टशब्दयोः पौद्गलिकत्वेन साधयिष्यमाणत्वाद्धेतोरसिद्धिः । दृष्टान्तस्य साधनवैकल्यं च । एकद्रव्यत्वस्यैकत्र द्रव्ये समवायरूपस्य शब्दे प्रसिद्धेः । गुणरूपस्य चास्य सतः क्रियाहेतुत्वं किं देवदत्तशरीरसंयुक्तात्मप्रदेशे द्वीपान्तरवर्ति .... .... .... ....
१० नत्वात्कळशादिवत् । न हि कळशादिरचेतनात्मको ज्ञाताहमिति प्रत्येति । चैतन्ययोगाभावादसौ न तथा प्रत्येतीति चेत् । न । अचेतनस्यापि चैतन्ययोगाच्चेतनोऽहमिति प्रतिपत्तेर्निरस्तत्वात् ।

एवं चात्मा स्यादभिन्नः स्वबुद्धेः संसिद्धोऽयं शुद्धयुक्तिप्रसादात् ।
हंहो तस्माद्यौगपक्षप्रवीणाः कक्षीकार्यं नात्र जाड्यं कदाचित् ॥६८१॥

१५ ये तु सौगतमतावलम्बिनः शेमुषीक्षणकदम्बकात्पृथक् ।
नाभ्यमंसत पुमांसमत्रतस्तत्पराकरणमातनिष्यते ॥ ६८२ ॥

मनस्यपि विप्रतिपत्तित्रयम् । नित्यत्वे निरंशत्वेऽणुपरिमाणत्वे च । तत्र नित्यत्वं प्रोक्तदृशा निरसनीयमनुदिशा ।

विज्ञानवादातिरिक्तं पुरुषमनङ्गीकुर्वतां बौद्धानां खण्डनम् ।

ननु कथमस्य नित्यत्वनिरासः । तथा हि—मनो
२० नित्यमस्पर्शत्वाद्व्योमवदित्यतस्तन्नित्यमेव सिध्यति । तदसत् । यस्मादतः कथंचित्सर्वथा वा तन्नित्यत्वं साध्येत । प्रथमे सिद्धसाधनम् । द्वितीये साध्यविकलो दृष्टान्तः । सर्वथा नित्यत्वस्य व्योमन्यप्यसिद्धेः । अथास्यानित्यतायामारम्भकं कारणं विजातीयं सजातीयं वा भवेत् । न विजातीयम् । तस्यारम्भकत्वा-
२५ संभवात् । विजातीयानां नारम्भकत्वमित्यभिधानात् । नापि सजाती-

यम् । यतो मनःप्रादुर्भावे कारणभूतानेकमनःसद्भावप्रसक्तिरेकस्य द्रव्यान्तरोत्पत्तावकारणत्वात् 'द्रव्याणि द्रव्यान्तरमारभन्ते' इति वचनात् । न चैकत्र शरीरेऽनेकमनःसद्भावोऽस्ति । प्रतिशरीरमेकैकतया मनसां स्थितत्वात् । अन्यथा प्रतिशरीरं युगपदेव रूपादिज्ञानोत्पत्तिः स्यात् । न च प्रतिनियतशरीरावरुद्धत्वेनान्योन्यं कारणाभिमतमनसां संयोगः संभवति । नाप्यसंयुक्तानां मनोजनकत्वं तेषामतिप्रसक्तेः । अथ मुक्तमनसां तदवरुद्धत्वाभावतः परस्परं संयोगसंभवात्तज्जनकत्वमिष्यते । तदसंबद्धम् । धर्माधर्मानधिष्ठितानां तेषां तज्जनकत्वानुपपत्तेः । अतोऽस्य कार्यत्वानुपपत्तेर्नित्यतैव श्रेयसीति । तदयुक्तम् । यतो यदि मन आरम्भकाणां मनस्त्वेनैव सजातीयत्वमभिधीयते तदा तन्तुपटादीनामपि कार्यकारणभावो न स्यात् । तेषामन्योन्यासंभवद्यवान्तरसामान्याधारतया तदपेक्षया सजातीयत्वासंभवात् । न हि तन्तुत्वापेक्षया पटस्य पटत्वापेक्षया तन्तूनां वा सजातीयत्वमस्ति । अथ पृथिव्यादिमपेक्ष्य त्वसजातीयत्वमुच्यते तर्हि तदपेक्षया यथा तन्तुपटादीनां सजातीयत्वसंभवात्कार्यकारणभावस्तथा पुद्गलद्रव्यापेक्षयाण्वादिना मनसः सजातीयत्वसंभवात्स स्यादविशेषात् । न च मनसः पौद्गलिकत्वमसिद्धम् । अनुमानात्तत्सिद्धेः । तथा हि – विवादास्पदं मनः पौद्गलिकं द्रव्येन्द्रियत्वान्नयनादिवत् । ननु नयनादीनां प्रतिनियतरूपादिप्रकाशकतया प्रतिनियतभूतकार्यता निरचायि । मनसस्त्वविशेषतः सकलरूपादिप्रकाशकतया तत्कार्यत्वासंभवात्कथं नयनादिदृष्टान्तेन तस्य पुद्गलकार्यत्वं भवेदित्यपि दुराशामात्रम् । प्रतिनियतभूत .... .... .... .... .... .... .... .... .... द्विशरारुतां सः ॥

यदप्यवादि 'गुणत्वाभिसंबन्धेन द्रव्याश्रयी अगुणवान् । संयोगविभागेष्वकारणमनपेक्ष इत्यनेन वा लक्षणेन' इत्यादि । तत्र गुणत्वाभिसंबन्धस्तावद्गुणलक्षणं द्रव्यत्वाभिसंबन्धवत्पराकरणीयः ।

द्रव्याश्रयीत्यादि पुनरित्थं तज्ज्ञापयति । द्रव्यं तूभयथा । द्रव्याश्रितम-
नाश्रितं च । तथा सर्वं कर्म । **आत्रेयो** व्याख्यातवान्— ' **नित्यमस्या-
श्रयः पारतन्त्र्यं द्रव्ये** ' इति द्रव्याश्रयी । द्रव्याश्रयीत्यतिशायने
मत्वर्थीयः । तेनैतद्द्रव्याश्रितम् । न तु सर्वद्रव्याश्रितमाकाशकाल-
५ दिगात्मनामाक्रियत्वात् । गुणा अस्य सन्तीति गुणवान् न गुणवान्
अगुणवानित्यनेन द्रव्याद्वैधर्म्यं दर्शयति । संयोगाश्च विभागाश्च संयो-
गविभागाः । तेषु संयोगविभागेष्वकारणं किं सर्वथा । न । किं
तर्ह्यनपेक्षः । किमुक्तं भवति । सापेक्षः कारणमिति । किं सर्वो गुणो
न किं तर्हि संयोगविभागावेव । कथं संयोगस्तावत्संयोगे कर्तव्ये
१० द्रव्योत्पत्तिमपेक्षते । कस्मात् । संयोगजसंयोगसमवायिकारणत्वा-
त्कार्यद्रव्यस्य । तथा हि—तन्त्वोराकाशेन सह यः संयोगः स द्वितन्तु-
काकाशसंयोगे कर्तव्ये द्वितन्तुकलक्षणस्य तन्त्वोः कार्यद्रव्यस्योत्पत्ति-
मपेक्षते । तथा कारणयोर्वंशदलयोर्विभागोऽपि स किं यस्य वंशदल-
स्याकाशदेशेन विभागमभिनिर्वर्तयिष्यन्वंशविनाशमपेक्षते । कस्मात् ।
१५ अविनष्टेऽस्वातन्त्र्यात् । स्वतन्त्रावयववृत्तिर्हि विभागो विभागमारभते
न तु कार्यवद्द्व्यवयववृत्तिरिति । व्यवच्छेद्यव्यवच्छेदकभावं च
विशेषणानामेवं निरदीदिशत् । द्रव्याश्रयी गुण इत्येतावदस्तु । मा
भूद्गुणवान् । संयोगविभागेष्वकारणमिति । न कार्यद्रव्ये प्रसंगात् ।
कार्यद्रव्यमपि द्रव्याश्रयि न च गुण इति तद्व्यवच्छेदार्थमगुणवानि-
२० त्यन्यगुणवान् । गुण इत्येतावदस्तु । माभूद्द्रव्याश्रयी संयोगवि-
भागेष्वकारणमिति । न । कर्मत्वे प्रसंगात् । कर्मत्वमप्यगुणवत् ।
न च तद्गुण इति तद्व्यवच्छेदार्थं द्रव्याश्रयीति । द्रव्याश्रयी अगुण-
वान्गुण इत्यस्तु, मा भूत्संयोगविभागेष्वकारणमिति । न । कर्मणि
प्रसंगात् । कर्मापि द्रव्याश्रयि अगुणवत् । न च तद्गुण इति
२५ तद्व्यवच्छेदार्थं संयोगविभागेष्वकारणमिति । संयोगविभागे-
ष्वकारणम्, इत्येतावदस्तु मा भूद्द्रव्याश्रयी अगुणवा-

निति । कस्मात् । द्रव्यकर्मणो विभागसंयोगकारणत्वात् । कर्म खलु स्वाश्रयमाश्रयान्तराद्विभज्याश्रयान्तरेण संयोजयतीति द्रव्यकर्मणो-र्विभागसंयोगकारणत्वं तद्विपरीतः संयोगविभागेष्वकारणं गुण इत्युक्ते न क्वचित्प्रसंगः । तस्माद्द्रव्याश्रयी अगुणवानिति नाभिधेयमिति न हेतुः । विशेषणार्थत्वाद्द्रव्याश्रयीत्यभिधानस्य । द्रव्याश्रयीत्य-भिधानं हेतुविशेषणार्थमुपादीयते । कथं यथा गम्येत रूपादयः केन-चिज्ज्ञा .... .... .... .... .... .... ....

.... .... ....प्रकृतत्वात् । अथानेन सविशेषणेनानुमानेन गुणत्व-सामान्यं रूपादिषु प्रसाध्य तद्विशिष्टानां तेषां संयोगविभागेष्वित्यादिल-क्षणमाख्यायत इति चेत् । तदचतुरस्रम् । यतो यद्यमुनोऽनुमाना-द्गुणत्वेन प्रसिद्धा रूपादयस्तदा किमपरेण सिद्धोपस्थायिना लक्षणेन कर्तव्यम् । यच्चोक्तम् ' अगुणवानिति स्वरूपोपवर्णनमेतत् ' इत्यादि तत्रेदानीं बहुतरमस्य स्वरूपमुपवर्णनीयं भवेदद्रव्यत्वमकर्मत्वमविशेषत्व-मित्यादीति न किंचिद्गुणलक्षणमुपपद्यते । येऽप्यमी तल्लक्ष्यभूता रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुख-दुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दस्वरूपाः ' **रूप-रसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ पर-त्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः** ' इति कणादवचनात्[1] । 'चकारेण येऽत्रानुक्ता गुणत्वेन च लोके प्रसिद्धा गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दास्ते सप्त सूच्यन्ते'[2] इति तद्व्याख्या-नाच्च चतुर्विंशतिर्गुणा गीयन्ते । तेऽपि न समगंसन्त । तत्संमतताया-स्तेषां संख्यायाः स्वरूपस्य च विचार्यमाणस्यानुपपत्तेः । तथा हि— संख्या तावद्विविधैव । स्वरूपं तु रूपत्वाद्यभिसंबन्धः । रूपं चामीषु चक्षुरिन्द्रियग्राह्यं पृथिव्युदकज्वलनवृत्ति । रसो रसनेन्द्रियावसेयः

१ वै. द. १।१।६। २ एतस्सदृशं वै. द. उपस्कारे विद्यते। परमुपस्कारकार एतद्ग्रन्थकृतोऽर्वाचीनतरः ।

पृथिव्युदकवृत्तिः । गन्धो घ्राणेन्द्रियपरिच्छेद्यः पृथिवीवृत्तिः । स्पर्शस्त्वगिन्द्रियावबोध्यः पृथिव्युदकज्वलनपवनवृत्तिः । एते च रूपरसगन्धस्पर्शाः पार्थिवपरमाणुष्वनित्याः पावकसंयोगात् । तत्र पाकजानां तेषामुत्पत्तेः । तथा हि—केचित्कन्दुके[1] पच्यमानस्य कलशादेः प्रागव-
५ स्था । विसदृशरूपादियोगिनः पाककारणभूतवेगवदग्निसंयोगपर्यालोचनया प्रलयोदयौ कल्पयांबभूवुः । यद्यपि हि कन्दुकनिक्षिप्ताः कुम्भादयस्तृणपर्णादिपिहितवपुषोऽपि तद्विवरप्रसृतनयनरश्मिना न विनष्टा इत्युपलभ्यन्ते । यद्यपि तत्संख्यास्तत्परिमाणास्तन्निवेशास्तद्देशाश्च पक्का अपि दृश्यन्ते तथापि पतन्तो विभाव्यन्ते । यद्यपि च तदा तेषां
१० कर्त्रादिकारककला .... .... .... .... .... ....
' द्विनोस्तु संयोगजः संयोगः ' इति केचित् । तदसारम् । सक्रियस्यावयविनः क्रियात एवावयव्यन्तरेण संयोगात् । यदि चैवं नेष्यते तदावयवानामपि स्वावयवापेक्षयावयवित्वेन सर्वत्रावयविषु कर्मजस्य संयोगस्योच्छेदः स्यात् । तथासति चावयविनि कर्माभावो भवेत् ।
१५ संयोगजस्तु संयोगः समुत्पन्नमात्रस्य चिरोत्पन्नस्य वा निष्क्रियस्य कारणं संयोगिभिरकारणैः सह कारणाकारणसंयोगपूर्वकः कार्याकार्यगतः । स चैकस्माद्द्वाभ्यां बहुभ्यश्च संयोगेभ्यो भवति । एकस्मात्तावत्तन्तुवीरणसंयोगाद्द्वितन्तुवीरणसंयोगः । उभयकर्मजो मेषयोरपसर्पणात् । द्वाभ्यां तन्त्वाकाशसंयोगाभ्यां द्वितन्तुकाकाशसं-
२० योगः । बहुभ्यश्च तन्तुतुरीसंयोगेभ्य एकः पटतुरीसंयोगः । अयं च सद्यः समुत्पन्नस्य निष्क्रियस्य द्रव्यस्य संयोगजः संयोगः । चिरोत्पन्नस्य तु देवदत्तस्य निष्क्रियस्य सक्रियहस्तकुड्यसंयोगपूर्वको देवदत्तकुड्यसंयोगः । स हि न हस्तक्रियाकार्यो व्यधिकरणस्य कर्मणः संयोगहेतुत्वादर्शनात् । सर्वश्चायं प्रयोगो मूर्तामूर्तानेकद्रव्यप्रदेशवृत्तिः
२५ समानासमानजात्यारम्भकः । समानजातीयस्य संयोगस्यासमानजाती-

---

[1] कन्दुके घटपचन्यां 'भट्टी' इति देशीभाषायाम् ।

यस्य द्वितूलके कार्ये प्रचयात्मा स्थूलपरिमाणस्यारम्भकः स्वाश्रये पटादौ । परत्र तु द्वितूलके स्थूलपरिमाणस्यारम्भकः । सामान्यगुणरूपो द्वीन्द्रियग्राह्योऽयावद्द्रव्यभावी च । तथा द्रव्यगुणकर्महेतुः । तथा हि—तन्तुसंयोगो द्रव्यस्य पटस्य हेतुः । आत्ममनःसंयोगो बुद्ध्यादीनां गुणानां हेतुः । एवं भेर्याकाशसंयोगः शब्दगुणस्य । ५ प्रयत्नवदात्महस्तसंयोगो हस्तकर्मणो हेतुः। एवं वेगवद्वायुसंयोगस्तृणकर्मण इति प्राप्तिपूर्विकाऽप्राप्तिर्विभागः । स च त्रिविध एव । अन्यतरकर्मज उभयकर्मजो विभागजश्चेति । तत्रान्यतरकर्मजः श्येनस्यापसर्पणात् । उभयकर्मजो मेषयोरपसर्पणात् । विभागजस्तु द्विविधः । कारणविभागात्कारणाकारणविभागाच्च । तत्र कारणविभागात्ताव- १० द्वंशदलयोर्विभागाद्दलाकाशविभागः । न चायमसिद्धः । विवक्षितावयवक्रियाकाशदेशेभ्यो विभागं न करोति द्रव्यारम्भकसंयोगविरोधिविभागोत्पादकत्वाद्या पुनराकाशदेशविभागकर्त्री सा द्रव्यारम्भकसंयोगविरोधिविभागोत्पादिका न भवति । यथा विकसत्कमलदलक्रिया । न च तथा विवक्षितावयवक्रिया तस्मादाकाशदेशेभ्यो विभागं १५ न करोतीति । यदि हि भिद्यमानवंशाद्यवयविद्रव्यस्य दललक्षणावयवयोः क्रियाकाशदेशेभ्यो विभागं कुर्यात्तर्हि वंशाद्यवयविद्रव्यारम्भकसंयोगविरोधिविभागोत्पादकत्वमेवास्यां न स्यात् । कमलदलक्रियावत् । ततो वंशाद्यवयवक्रियाऽवयवान्तरादेव विभागं करोति । नन्वाकाशदेशादिति विभाग एवाकाशदेशविभागोत्पादकोऽवयवानामभ्युपेयः । तथा २० हि—यदावयवे कर्मोत्पन्नमवयवान्तराद्विभागं करोति न तदाकाशदेशात् । यदा त्वाकाशदेशान्न तदावयवान्तरादिति स्थितिः । किंकृता पुनरियं स्थितिरिति चेत् । उच्यते । या ह्यवयवक्रिया नभोभागविभागकारिणी नासौ द्रव्यारम्भकसंयोगप्रतिपक्षभूतं विभागमारभमाणा दृश्यते दिनकरकिरणपरामर्शोपजनितकमलविकासकारिक्रियावत् । २५ तदेवं कथमिति । कमलस्य मुकुलविकासदशयोः प्रत्यभिज्ञायमान-

त्वेनाविनाशनिश्चयात् । इयं तु पाट्यमाने वंशे दलक्रिया द्रव्यारम्भकसंयोगप्रतिद्वन्द्वीभूतविभागारम्भिकोपलभ्यत इति नासौ नभसो विभागमारभेतेत्यत एषा स्थितिरस्तीति विभागजविभागकल्पना क्रियते संयोगान्तं कर्मेति तावत्स्थितम् । अन्यथा हि तस्य कालान्तरस्थायित्वं नित्यद्रव्यसमवेतस्य च नित्यत्वं स्यात् । तस्मात्कर्मणोऽचिरजीवित्वात्तदविनाशकेन संयोगेन भवितव्यम् । उत्तरश्च संयोगः पूर्वसंयोगोपरमे सति जायते नान्यथा । न च विभागव्यतिरिक्तः कश्चन संयोगस्य हन्ता समस्ति ।

कर्मानन्तरसंयोगजन्म निर्ज्ञातकौशलम् ।
न हि प्राक्तनसंयोगविनाशाय प्रकल्प्यते ॥ ६८३ ॥

तस्माद्विभागेनैव संयोगवैरिणा भाव्यम् । स च यदधिकरणो विभागस्तदधिकरणमेव संयोगमुपशमयति । न ह्यङ्गुलिविभागः । कुण्डबदरसंयोगोपमर्दाय प्रभवतीत्यतो न वंशदलवृत्तिर्विभागो दलाकाशसंयोगमपहन्तुमलमिति । नूनं दलाकाशसंयोगविरोधिना दलाकाशविभागेन भवितव्यम् । तदिदानीं तस्योत्पत्तिकारणचिन्तायां क्रियाया वंशदलविभागमात्रोपजननचरितार्थत्वात्तन्निर्माय विभागान्तरनिर्माणे विरम्य व्यापारासंवेदनादवश्यं वंशविभाग एव प्रत्यासन्नतया दलाकाशविभागारम्भकोऽभ्युपगमनीयः । एवमनभ्युपगमे कर्मनित्यत्वप्रसंगात् । कारणाकारणविभागात्तु विभागः करकुड्यविभागात्कुड्यकलेवरविभागः । कलेवरकारणं हि करस्तदकारणं च कुड्यं तयोर्विभागादयं जायते । न ह्ययं शरीरक्रियाकार्यः । तदानीं शरीरस्य निष्क्रियत्वात् । नापि हस्तक्रियाकार्यः । व्याधिकारणस्य कर्मणो विभागहेतुत्वादर्शनात् । अतः कारणाकारणविभागस्तस्य कारणमिति कल्प्यते । संयोगवदस्यापि मूर्तामूर्तानेकद्रव्यप्रदेशवर्त्योदयो-( र्तित्वात् । येन )? वरमयं विभागशब्दहेतुः । विभागहेतुत्वं दर्शितम् । शब्दहेतुत्वं तु वंशे पाट्यमाने सति योऽयमाद्यः

शब्दस्तस्य वंशदलविभागः कारणम् । परत्वमपरत्वं च परापराभिधानप्रत्ययनिमित्तम् । तद्द्विविधं दिक्कृतं कालकृतं च । दिक्कृतं देशविशेषप्रत्यायकम् । कालकृतं वयोभेदप्रत्यायकम् । तत्र दिक्कृतस्योत्पत्तिरभिधीयते । कथमेकस्यां दिश्यवस्थितयोः संयुक्तसंयोगबहुत्वाल्पत्वे सत्येकस्य द्रष्टुः संनिकृष्टमवधिं कृत्वा तस्माद्विप्रकृष्टोऽयमिति ५
परत्वाधारे विप्रकृष्टा बुद्धिरुत्पद्यते । तामपेक्ष्य परेण दिक्प्रदेशेन योगात्परत्वस्योत्पत्तिः । विप्रकृष्टं चावधिं कृत्वेतरस्मिन्संनिकृष्टा बुद्धिरुत्पद्यते । तामपेक्ष्यापरेण दिक्प्रदेशेन योगादपरत्वस्योत्पत्तिः । कालकृतयोरपि कथं वर्तमानकालयोरनियतदिग्देशसंयुक्तयोर्युवस्थविरयो रूढश्मश्रुकार्ष्ण्यस्य वलीपलितादिसान्निध्ये सत्येकस्य द्रष्टु- १०
र्युवानमवधिं कृत्वा स्थविरे विप्रकृष्टा बुद्धिरुत्पद्यते । तामपेक्ष्य परेण कालप्रदेशेन योगात्परत्वस्योत्पत्तिः । स्थविरं चावधिं कृत्वा यूनि संनिकृष्टा बुद्धिरुत्पद्यते । तामपेक्ष्यापरेण कालप्रदेशेन योगादपरत्वस्योत्पत्तिः । एते चापेक्ष्यबुद्धिविनाशादाश्रयविनाशाद्वा विनाशिनी मूर्तैकद्रव्यव्याप्यवृत्तिनी सामान्यगुणरूपे द्वीन्द्रियग्राह्ये अयावद्द्रव्य- १५
भाविनी सर्वत्र कारणं च । बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्यायाः । सा चानेकप्रकारार्थानन्त्यात्प्रत्यर्थनियतत्वाच्च । तस्याः सत्यप्यनेकविधत्वे समासतो द्विविधा । विद्या चाविद्या च । तत्राविद्या चतुर्विधा संशयविपर्ययानध्यवसायस्वप्नलक्षणा । विद्यापि चतुर्विधा प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा । द्विविधापीयमात्मैकद्रव्यप्रदेशवृत्तिर्वैशेषिकगुणरूपाऽ- २०
यावद्द्रव्यभाविनी अन्तःकरणग्राह्यात्ममनःसंयोगप्रभवापरत्वापरत्वद्वित्वद्विपृथक्त्वादीनां निमित्तम् । अनुग्रहलक्षणं सुखम् । अनुगृह्यतेऽनेनेत्यनुग्रहः । अनुग्रहलक्षणमनुग्रहस्वभावमित्यर्थः । सुखं ह्यनुकूलस्वभावतया स्वविषयानुभवं कुर्वत्पुरुषमनुगृह्णाति । अयमर्थः स्रगाद्यभिप्रेतविषयसांनिध्ये सतीष्टोपलब्धीन्द्रियार्थसंनिकर्षाद्धर्माद्यपेक्षा- २५
निमित्तादात्ममनसोः संयोगाच्चासमवायिनो यदनुग्रहाभिष्वङ्गनय-

नादिप्रसादजनकमुत्पद्यते तत्सुखं संनिहितेऽप्यभिमतेऽर्थे विषयान्तर-व्यासक्तस्य सुखानुत्पादादिष्टोपलब्धेः कारणत्वं गम्यते । वियुक्तस्य सुखाभावाद्विषयसंनिकर्षस्यापि कारणत्वावगमः । अनुग्रहस्त्विह सुख-विषयं संवेदनम् । तच्च सुखमतीतविषयेषु स्मृतिजम् । अनागतेषु
५ संकल्पजम् । यत्तु विदुषामसत्सु विषयानुस्मरणसंकल्पेष्वाविर्भवति तद्विद्याशमसंतोषधर्मविशेषनिमित्तमिति । शेषमस्यात्मैकद्रव्यप्रदेश-वृत्त्यादिबुद्धिवत् । उपघातलक्षणं दुःखम् । उपहन्यतेऽनेनेत्युपघातः । उपघातलक्षणमुपघातस्वभावमित्यर्थः । दुःखमुपजातं प्रतिकूल-स्वभावतया स्वात्मविषयमनुभवं कुर्वदात्मानमुपहन्ति । अयमर्थः—
१० विषाद्यनभिप्रेतविषयसांनिध्ये सत्यनिष्टोपलब्धीन्द्रियार्थसंनिकर्षादध-र्माद्यपेक्षानिमित्तादात्ममनःसंयोगाच्चासमवायिनो यदमर्षोपघातदैन्य-निमित्तमुत्पद्यते तद्दुःखम् । अमर्षोऽसहिष्णुता द्वेष इति यावत् । उपघातो दुःखानुभवः । दुःखे सति तदनुभवलक्षण आत्मोपघातः स्यात् । दैन्यं विच्छायता । तेषां निमित्तम् । अतीतेषु सर्पव्याघ्र-
१५ चौरादिषु स्मृतिजम् । अनागतेषु संकल्पजम् । अस्यापि शेषमात्मैक-द्रव्यप्रदेशवृत्त्यादिबुद्धिवत् । स्वार्थं परार्थं वा । अप्राप्तप्रार्थना इच्छा । सा चात्ममनसोः संयोगात्सुखापेक्षात्स्मृत्यपेक्षाद्वोत्पद्यते । प्रयत्नस्मृतिधर्माधर्मनिमित्तं कामोऽभिलाषो रागः संकल्पः कारुण्यं वैराग्यमुपधाभाव इत्येवमादयः । इच्छाभेदा मैथुनेच्छा कामोऽ-
२० भ्यवहारेच्छाऽभिलाषः । पुनःपुनर्विषयानुरञ्जनेच्छा रागः । अना-गतकरणेच्छा संकल्पः । स्वामनपेक्ष्य परदुःखप्रहाणेच्छा कारुण्यम् । दोषदर्शनाद्विषयपरित्यागेच्छा वैराग्यम् । परवञ्चनेच्छा उपधा । अन्तर्निगूढेच्छाभावश्चिकीर्षा जिहीर्षेति क्रियाभेदादिच्छाभेदा भवन्ति । शेषमस्या अपि सर्वं बुद्धिवत् । प्रज्वलनात्मको द्वेषः ।
२५ यस्मिन्सति प्रज्वलितमिवात्मानं मन्यते स द्वेषः । स चात्ममनसोः संयोगाद्दुःखापेक्षात्स्मृत्यपेक्षाद्वोपजायते प्रयत्नधर्माधर्म-

स्मृतिनिमित्तम् । तत्रैनं हन्मीति प्रयत्नो द्वेषात् । वेदार्थविप्लवकारिषु द्वेषाद्धर्मः । तदर्थपरिपालनपरेषु द्वेषादधर्मः । स्मृति.... .... ....
.... ....गणनया गुणानां चतुर्विंशतेरधिकत्वात् । अथ नीलधवलादिव्यक्तिभेदेऽपि सर्वत्र रूपत्वसामान्याविशेषादेक एकरूपोऽयं गुण इति न तत्संख्याक्षतिरिति चेत् ; तर्हि धर्माधर्मयोरप्यदृष्टत्वसामान्य- ५
विशेषादेक एवायमपि गुणः स्यादिति कथं न तत्संख्याव्याघातः । अथादृष्टत्वं नाम नास्त्येव सामान्यम् । ननु रूपत्वमपि कथं भवेत् । नीलादौ सर्वत्र रूपं रूपमिति प्रत्ययानुवृत्तेरिति चेत् । इतरत्राप्यदृष्टमदृष्टमिति प्रत्ययानुवृत्तेस्तदस्तु । अथौपाधिक एवायं प्रत्ययो न सामान्यनिमित्तः । सामान्येषु सामान्यप्रत्ययवदिति चेत् । नीला- १०
दावपि किं न तथा । कस्तत्रोपाधिरिति चेत् । धर्माधर्मयोः क इति वाच्यम् । दर्शनयोग्यपदार्थेतरत्वमिति चेत् । इतरत्रापि चक्षुर्ग्राह्यत्वं भविष्यति । दर्शनयोग्यपदार्थेतरत्वस्य चोपाधित्वे गुरुत्वमप्यदृष्ट इति व्यपदिश्येत । तस्योपाधेस्तत्र भावात् । अथ नीलादिषु रूपप्रत्ययानुवृत्ती रूपत्वसामान्यनिमित्ता तावदुभाभ्यामपि प्रतिपन्नेति चेत् । १५
एवमेतत् । न हि तदस्माभिः प्रतिषिध्यते किं तु प्रसंगः प्रवर्त्यते । यदि धर्माधर्मयोरदृष्टप्रत्ययानुवृत्तिरौपाधिकी तदाऽन्यत्रापि सा तथैव स्यात् । समानयोगक्षेमत्वात् । किं च भवतापि यत्र वस्तुन्युपेयमाने बाधकोपनिपातस्तत्रैव तत्प्रत्ययस्यौपाधिकत्वमुपागामि । यथा सामान्येषु सामान्योपगमेऽनवस्थोपनिपाते सामान्यप्रत्ययस्य । न चादृष्टत्वोपगमे २०
किंचिद्बाधकमस्ति । गुणेषु चतुर्विंशतिसंख्याव्याघातोऽस्तीति चेत् । असदेतत् । अस्याद्यापि विवादास्पदीभूतत्वात् । अथ धर्माधर्मौ तदुभयवर्त्येकसामान्यानुगतौ न भवतो गुणत्वात् । यावेवं तावेवम् । यथा सुखदुःखे तथा चैतौ । ततस्तथेत्यनुमानमस्त्येव बाधकमिति चेत् । तदशुभम् । सुरभ्यसुरभिगन्धाभ्यां गुणत्वस्य व्यभिचारित्वात् । २५
तौ हि गुणौ तदुभयवर्तिनैव सामान्येन गन्धत्वेनानुगतौ च । न च

वाच्यं ' अनुष्णाशीतस्पर्शवत् सुरभ्यसुरभ्योरुभयाभावसमन्वितस्तृतीयो राशिर्गन्धत्वानुगतोऽस्तीत्यनयोस्तदुभयवर्त्येकसामान्यानुगतत्वान्न गुणत्वस्य व्यभिचारः ' इति प्रशस्तकरभाष्योक्तिविरोधापत्तेः । तथा चायमाह–'सुरभिरसुरभिश्च' इत्यन्यथा त्वनुष्णाशीतवेदनमप्यदध्यादिति न चतुर्विंशतिसंख्यानीषु संगच्छते । यथावसरमेषामेऽपि पराकरिष्यते । योऽपि पृथिव्युदकज्वलनवृत्तीत्यादिश्चतुर्णां रूपादीनां पृथिव्यादौ वृत्तिनियमो न्यगादि । सोऽपि नोपापादि । पृथिव्यादीनां चतुर्णामपि पौद्गलिकत्वेन तच्चतुष्टयाधिष्ठानत्वात् । यत्तु न तथा तेषामनुभवनं तदनुभूतत्वादिति प्राक्प्रतिपादितमेव । यच्च पाकजोत्पत्तिप्रक्रियोद्घोषणेन पार्थिवपरमाणुषु रूपादीनामेकान्तेनानित्यत्वमाप्यादिपरमाणुकार्यद्रव्येषु नित्यमनित्यं चावाचि तदपि न नित्यानित्यानेकान्तस्य प्राक्समर्थनादपास्तम् । यच्च ' मूतककद्रव्यव्याप्यवृत्तयः ' इत्युक्तं तत्रैकान्तरूपे द्रव्येऽमीषां वृत्तिरीप्सामासे तद्विपरीते वा । तत्र न तावत्प्राच्यः पक्षः पेशलः । द्रव्यस्य स्वावयवेभ्यः कथंचिद्विष्वग्भूतस्य प्रसाधितत्वेनैकान्तैकरूपत्वस्य तत्राप्रसिद्धेः । द्वितीयपक्षे तु न किंचिदनिष्टम् । व्याप्यवृत्तित्वं चामीषामेकान्तैकरूपाणामननुरूपमेव । एवं हि कुंचिकादिविवरवर्तिसूक्ष्मप्रदीपाद्यालोकोद्योतितापवरकादिव्यवस्थितपृथुतरपटादिद्रव्यसमवेतशुक्लादिरूपाभिव्यक्तौ यावद्द्रव्यवर्तिनो रूपादेरुपलब्धिः स्यात् । अन्यथा निरंशैकरूपताव्याहतिः । तर्हि तद्रूपस्य प्रतिभासाप्रतिभासलक्षणविरुद्धधर्माध्यासो युक्तो विरोधात् । कथंचिदेकरूपाणां तु तेषां युक्ता व्याप्यवृत्तिः । रूपरसगन्धस्पर्शाद्यात्मकत्वात्पटादिद्रव्यस्य । स्वाश्रयादन्यत्रारम्भका इत्यपि स्वगृहमान्यम् । यतोऽयमत्राभिप्रायः—अवयवैः स्वसमवेतकार्ये निष्पाद्यमाने तद्वर्तिनो रूपादयस्तत्रैव रूपादीनारभन्ते न स्वाश्रयभूतेष्ववयवेष्विति ।

---

१ प्र. पा. भा. पृ. ४५ ।

एतच्चानुपपन्नम् । न ह्यवयवैर्भिन्नोऽवयवी निष्पाद्यत इत्यत्र प्रमाणमस्ति यतस्तद्वृत्तिभिस्तैस्ते तत्रारभ्येरन् । द्रव्यं तु प्राक्तनाकारपरित्यागेनो-त्तरमाकारमाक्रमदुपलभ्यते यथा पिण्डाकारपरित्यागेन कुम्भाकारमाक्रा-मयन्ती मृत् । ननु तन्तवः कुविन्दकरव्यापारात्पटमारभमाणा दृश्यन्ते । नैवम् । तत्रापि पार्थिवद्रव्यस्यैव विशकलिततन्तुपर्यायप्रहाणेन ५ समुदितत्वपर्यायप्राप्तेर्दर्शनात्तत्समुदायस्यैव च पटद्रव्यव्यपदेश्यत्वात् । न चैवं पटस्य निरवयवत्वं स्वावयवद्रव्याद्व्यतिरेकेण पटस्यापि सावयवत्वात् । तस्मान्न रूपादीनां स्वाश्रयादन्यत्रारम्भकत्वं युक्तम् । वैशेषिकगुणा इति च कोऽर्थः—विशेषो व्यवच्छेदस्तस्मै ये भवन्ति गुणास्ते वैशेषिकगुणा रूपादयः । ते हि स्वाश्रयमितरस्माद्व्यव- १० च्छिन्दन्ति न सांख्यादयः । तेषां स्वतो विशेषाभावात् । यस्तु तेषां विशेषः स स्वाश्रयविशेषकृत एवेति चेत् । तदसंगतम् । गुरुत्ववेगनै-मित्तिकद्रवत्वादीनामपि वैशेषिकगुणत्वापत्तेः । तेषामपि स्वाश्रयस्य मूर्तिमतः पृथिव्यादेर्द्रव्यस्येतरस्मादमूर्तादाकाशादेर्व्यवच्छेदकत्वात् । अथ गुरुत्वस्य पृथिव्युदकयोर्वेगस्य पृथिव्यादिषु चतुर्षु नैमित्तिकत्वस्य १५ पृथ्वीतेजसोः साधारणधर्मत्वात् । सामान्यगुणत्वं तर्हि रूपादीनामपि केषांचित्तद्वत्तेषामपि द्रव्यत्रयचतुष्टयद्रव्यसाधारणधर्मत्वात् । समा-नजातीयकारणगुणपूर्वकत्वं चावयवैरवयव्यारम्भे पराकृते पराकृतमेव यावद्द्रव्यभावित्वमपि नामीषां संगच्छते । यस्मादेतेषां पर्यायप्रवाह-सत्त्वापेक्षयैकपर्यायसत्त्वापेक्षया वाभिधीयेत । न । आद्यपक्षे विप्रति- २० पत्तिः । घटादिद्रव्यं यावदमीषामपरापरेषामुत्पादिष्णूनां प्रवाहस्य स्वीकारात्तस्य कथंचित्तदात्मकत्वात्पाकजानामप्येवं यावद्द्रव्य-भावित्वापत्तेश्च । द्वितीयपक्षे तु प्रत्यक्षपीडा । सत्येव पटादौ प्रत्यग्राणां तेषां विनाशेन पुराणानामुन्मज्जतां प्रत्यक्षेण प्रेक्षणात् । न च पाकजोत्पत्तिक्रमेण पटादिरूप्यन्य एवो- २५ त्पद्यत इति वाच्यम् । अत्र प्रमाणाभावात् । सर्वस्योपन्यस्यमानस्य

तस्य स एवायं पटादिरिति प्रत्यभिज्ञानेन बाधनात् । न च सदृशापरा-
परोत्पत्तिविप्रलब्धबुद्धीनां प्रमातॄणामपनीतोद्गतनखशिखरादिष्विवात्रापि
भ्रान्तमेवेदं प्रत्यभिज्ञानमिति वक्तव्यम् । नखादेरिव पटादेरपि प्रध्वं-
सोत्पादसिद्धिनिबन्धनप्रमाणमन्तरेणैवंविधव्यवस्थायाः कर्तुमशक्तेः ।
५ न रूपादीनां प्रध्वंसोत्पादाविव पटादिप्रध्वंसोत्पादयोः प्रमाणम् ।
तद्विनाशोत्पादयोर्द्रव्यस्यापि ताभ्यां भीवतव्यमेवेति नियमाभावात् ।
न च तेषां यावद्द्रव्यभावित्वनिर्णयात्तन्नियमः साधीयान्, याव-
द्द्रव्यभावित्वस्याद्यापि विवादपङ्कनिमग्नत्वात् । ननु रूपादिपर्याय-
प्रध्वंसोत्पादैर्याद्रव्यस्यापि कथंचित्तावुपगतावेव । अन्यथा सर्वथा
१० द्रव्यपर्याययोर्भेदापत्तेः । तथा च सिद्धममीषां कथंचिद्यावद्द्रव्य-
भावित्वमपीति चेत् । एवमेतत् । किं त्वेवं न कश्चिद्यावद्द्रव्य-
भावी गुणो नाम स्यात् । संयोगादिगुणानामप्येवं यावद्द्रव्यभा-
वित्वसिद्धेः । एवमग्रेऽपि सर्वं दूषणं स्वयमूहनीयम् । विशेषस्तु दूष-
यिष्यते । यस्तु ताथागतो रूपादयोऽमव एव न गुणा इत्यगादी-
१५ त्तस्य कुतोऽयमभ्युपगमः । भेदानुपलब्धेश्चेत् । तत्किमय-
मणूनुपलभते संचितांस्तानिति चेत् । ननु संचयस्तेषां स्थूला-
कारपरिणामः परमाणुभ्यः कथंचिदतिरिक्तः प्राक्साधितस्त-
तस्तस्यैवोपलब्धिरस्ति नाणूनाम् । अयमपि रूपरसगन्धस्प-
र्शात्मैव न तद्वानिति चेत् । कुतः । एतद्भेदानुपलब्धेश्चेत् । सा यदि
२० देशकालभेदेनानुपलब्धिर्विवक्षिता तदा रूपादिभिरेव व्यभिचारिणी ।
अथ स्वरूपभेदेन तदाऽसिद्धा । पटस्य रूपादय इति तेषां भिन्न-
स्वरूपेण प्रतीतेः । ततः सिद्धा अमी कथंचित्स्थूलाकारातिरेकिणः ।
यदुक्तम् ' द्वित्वादिसंख्यानुपरार्धता(र्धतोऽ)अनेकद्रव्या' इति । तत्र
परार्धान्तैव संख्येति कुतस्त्या नियतिः । परार्धमेव यावद्व्यवहार-
२५ दर्शनादिति चेत् । नन्वयं व्यवहारः पामरप्रायपुरुषाणामेव संबन्धी
विवक्षितो विदुषां वा । प्रथमे कल्पे शतादेरपि संख्यात्वं दुरापम् ।

शतमिति न किंचिज्जानीमो विंशतिपञ्चकं तु दश इत्येवं तेषां व्यवहारदर्शनात् । द्वितीये त्वेकाधिकपरार्धेऽपि विद्वद्भिर्व्यवहरणात्कथं न तस्याः संख्यात्वं स्यात् । तथा च दृश्यते विदुषां व्यवहारः **'परार्धानां परार्धानि प्रसूते श्लोकतर्णकान्'** इत्यादि । अथ **गणितशास्त्रे**—**'मध्यं परार्धमाहुर्यथोत्तरं दशगुणं तज्ज्ञाः'** इति परार्धमेव यावदस्या अभिधानात्तदन्तैवेयमवसीयत इति चेत् । तदयुक्तम् । तदभिन्नस्याभिधेयाव्यापकत्वादियत्ता हि संख्या समाख्यायते । सा च परार्ध इवैकाधिकपरार्धादावप्येवंभूतैवानुभूयते । किंचेदं गणितशास्त्रं नियामकतया व्याख्येयं किंतूपलक्षक (ण) तया । एवमन्यदपि दशगुणया वृद्ध्या अङ्कस्थाने ज्ञेयमिति । **'यत्र इयत्ताव्यवहारः परिसमाप्यते स परार्धः'**[1] इति **श्रीधरः** । सोऽपि यद्येवं तेन वचसा दशगुणितं मध्यं परार्धशब्दाभिधेयमभिदधीत तदा प्राक्तनेनैवापास्तः । अथ यतः कुतोऽपि पुरस्तादियत्ताव्यवहारो नास्ति तत्परार्धाभिधेयमभिदध्यात्तदा सर्ववाद्यविवादप्रतिपन्नप्रामाण्यगणितशास्त्रबाधापत्तिः । तत्र दशगुणितमध्यस्य परार्धाभिधेयत्वेन प्रसिद्धेः । यच्चोक्तम्-'एकत्वेभ्योऽपेक्षानामकानेकविषयबुद्धिसहितेभ्यो निष्पत्तिः' इति तदप्ययुक्तम् । यतोऽनेकविषयबुद्धिसहितेभ्य इत्यत्र किमेकविषयबुद्धिसाहित्याभावो विवक्षायां चक्रे द्वित्र्यादिपदार्थगोचरसाहित्यं वा । यद्याद्यः पक्षस्तदा सुप्तमत्तमूर्च्छिताद्यवस्थास्वप्यस्य भावाद्वित्वादिसंख्योत्पत्तिः कथं न स्यात् । अथ द्वितीयपक्षः । तथा च **श्रीधरः**—**'अनेकशब्द एको न भवतीति व्युत्पत्त्या द्वयोर्बहुषु च द्रष्टव्यः'**[2] इति । अत्र च परस्पराश्रयदोषः । उत्पन्ने हि द्वित्वादौ तत्र तद्बुद्धिरुत्पत्स्यते । तदुत्पत्तौ च द्वित्वादेरुत्पत्तिरिति । अथ नैकमनेकमेकत्वाभावविशिष्टं वस्तु तद्विषयबुद्धिसहितेभ्य इत्यत्र विवक्षितम् ।

---

१ न्या. कं. पृ. ११५ पं. ७ 'यत्र' इत्यत्र 'यस्मिन्' इत्यस्ति न्यायकन्दल्याम् ।
२ न्या. कं. पृ ११२ पं. १२ ।

तदप्यक्षमम् । द्व्यादिवस्तुष्वेकत्वाभावस्याभावात् । तेषां स्वेन स्वेनैकत्वेनाधिष्ठितत्वात् । अथ द्व्यादिष्वेकस्यैकत्वस्याभावः सुप्रतीत एव । नन्वेकमेकत्वमिति स्वसिद्धान्तविरुद्धमभिधीयते । एकत्वस्य गुणत्वेन तत्रैकत्वगुणान्तराभावस्य 'निर्गुणा गुणाः' इति त्वत्सिद्धान्तेऽभिधानात् ।
५ औपचारिकं तत्तत्र भविष्यतीति चेत् । किंगतस्य तस्य तत्रोपचारः । द्रव्यगतस्येति चेत् । ननु द्रव्येऽपि तावत्तदेवैकत्वमस्ति नान्यदिति तदेव तत्रोपचर्यत इत्यहो शुद्धा बुद्धिः । अस्तु वा यथाकथंचिदनेकविषयबुद्धिसहितशब्दार्थस्तथापि यदि बुद्धिसकाशाद्बाह्यार्थस्योत्पादः स्यात्तदा द्वित्वादिवदन्यस्याप्यर्थस्यायं किं न भवेत् । अथ द्वि-
१० त्वादिरेव तदन्वयव्यतिरेकानुविधायित्वात्तस्यैव ततः समुत्पत्तिरिति चेत् । नैवम् । अभिव्यञ्जकत्वेनापि तस्यास्तेनान्वयव्यतिरेकयोरनुविधानस्य संभवात्प्रदीपस्येव पटादिना । अथ यदि द्वित्वादिकमबुद्धिजं स्याद्रूपादिवत्पुरुषान्तरेणापि प्रतीयेत । नियमहेतोरभावात् । बुद्धिजत्वे तु यस्य बुद्ध्या तज्जन्यते तेनैवोपलभ्यत इति नियमोपपत्तेः ।
१५ प्रयोगस्तु—द्वित्वादि बुद्धिजं नियमेनैकप्रतिपत्तृवेद्यत्वात् । यन्नियमेनैकप्रतिपत्तृवेद्यं तद्बुद्धिजं यथा सुखादिकम् । नियमेनैकप्रतिपत्तृवेद्यं च द्वित्वादि तस्मादिदमपि बुद्धिजमिति । तदपि नोपपद्यते । नियमेनैकप्रतिपत्तृवेद्यस्यासिद्धेश्चैत्रेणेव मैत्रेणापि द्वित्वादेर्विद्यमानत्वात् । अन्यदेव द्वित्वादि मैत्रेण वेद्यत इति चेत् । कुत एतत् । तदपेक्षाबुद्धिवशादन्य-
२० स्यैव तस्योत्पत्तेरिति चेत् । तदचतुरस्रम् । चक्रकचक्राक्रान्तत्वात् । तथा हि—सिद्धे द्वित्वादेर्बुद्धिजत्वे चैत्रापेक्षया मैत्रस्यान्यद्वित्वादिवदेकत्वसिद्धिः । तत्सिद्धौ चैत्रस्य नियमेनैकप्रतिपत्तृवेद्यत्वसिद्धिः । तत्सिद्धौ चैत्रस्य बुद्धिजत्वसिद्धिरिति । किं च यदेव चैत्रेण द्वित्वादिकमवेयते यदि तदेव मैत्रेणापि वेद्येत तदा को दोषः स्यात् । न
२५ खलु योग्यदेशावस्थितः पदार्थः प्रतिनियतेनैव प्रमात्रा प्रतीयत इति नियमोऽस्ति । रूपादेरनियतपरिच्छेद्यत्वदर्शनात् । ननु सुखादि-

धर्मः प्रतिनियतेनैव वेद्यमानो दृश्यते । सत्यम् । तस्य प्रतिनियतात्मसमवायित्वे तमेव प्रतियोग्यदेशत्वात् । द्वित्वादिकं तु बाह्यार्थधर्मतया रूपादिवत्तद्देशवर्तिप्रमातॄनशेषानपेक्ष्य योग्यदेशमेवेति तद्वत्प्रकाशेत । न च नियतप्रमातृबुद्धिजन्यत्वात्तस्यैव तद्ग्रहीतृत्वं योग्यम् । एवं हि सति कलशादिरपि येनैवं जनितं तस्यैव ग्रहीतुं योग्यः स्यात् । ५
असिद्धं चाद्यापि प्रमातृबुद्धिजत्वं द्वित्वादेः । नन्वेवं रूपादिवद्द्वित्वादेरपि प्रथमदर्शनसमय एव किं न प्रतिभासः । ननु निरन्तरतरतिमिरनिकरपरिकरिते मूर्तेः कुम्भस्यापि किं नासौ । अभिव्यञ्जकस्यालोकस्यासंभवादिति चेत् । इतरत्राप्यभिव्यञ्जिकाया अपेक्षाबुद्धेरभावादित्यवेहि । यदा त्वसौ संपद्येव भवति तत्प्रतिभासः । ननु कुम्भा- १०
दावभिव्यक्ते यथा तद्देशवर्तिनिःशेषप्रमातॄणां तत्प्रतिभासः प्रभवति तथा चैत्रसत्कापेक्षाबुद्ध्यभिव्यक्ते द्वित्वादौ मैत्रादीनामपि तद्बुद्धिर्भवेत् । न चैवमिति । न व्यक्तिपक्षः क्षेमकर इति चेत् । नैवम् । उत्पत्तिपक्ष एवैतद्दूषणावताराद्घटादौ स्वजनकादन्यैरपि प्रतिभासदर्शनात् । अभिव्यक्तिपक्षे तु नायं दोषो यतश्चक्षुःस्पर्शनसहकारिणोऽ- १५
भिव्यञ्जकाः स्वयमुपलभ्यमाना एवान्यमुपलम्भयन्ति । घटाद्यभिव्यञ्जकप्रदीपाद्यालोकशरीरसंसक्ततोयशीतस्पर्शाभिव्यञ्जकवायुवत् । न च चैत्रबुद्धिर्मैत्रादीनामध्यक्षा । तमेव प्रति तस्याः स्वसंविदितत्वाच्चक्षुराद्यगोचरत्वाच्चेति तं प्रत्येकेयमभिव्याञ्जिका किंविषयासावपेक्षाबुद्धिरिति चेत् । एकत्वादिगोचरेति ब्रूमः । तथा हि—पदार्थे २०
एकस्मिन् ज्ञाते पदार्थान्तरमेकमपेक्ष्य द्वित्वमभिव्यज्यते । एकस्मिन् द्वयोर्वा ज्ञातयोर्द्वावेकं वापेक्ष्य त्रित्वमभिव्यज्यते । एकस्मिन् द्वयोस्त्रिषु वा ज्ञातेषु त्रीन् द्वावेकं वापेक्ष्य चतुष्ट्वमभिव्यज्यत इत्यादि तावज्ज्ञेयं यावत्पर्यन्तसंख्येति न नियमेनैकप्रतिपत्तृवेद्यत्वं सिद्धम् । अनुमानबाधितश्चात्र पक्षः । तथा हि—द्वित्वादिकं बुद्धिजं न भवति २५
संख्यात्वादेकत्ववदिति पराकृते चैवं द्वित्वादेर्बुद्धिजत्वेऽपेक्षाबुद्धि-

विनाशाद्विनाश इति दूरोत्सारितमेव । एवं च सिद्धमेकत्वद्वित्वादेरपि-पदार्थेषु सदैव सत्त्वमिति ।

ये सुगतसमयवासितमनसः संख्यास्वरूपमात्रेऽपि ।
विप्रतिपत्तिं विदधति तेषामेषा क्षणं शिक्षा ॥ ६८४ ॥

५ यदि हि संख्या काचिन्न स्यात्तदानीं तत्प्रत्ययो निरालम्बनः स्यात् । अथ न संख्याप्रत्ययोऽस्तीन्द्रियजस्तत्रैकस्मिन्स्वलक्षणे प्रतिभासमाने स्पष्टमेकत्वसंख्यायाः प्रतिभासनाभावात् । न हीदं स्वलक्षणमियमेकत्वसंख्येति प्रतिभासद्वयमनुभवामः । नापि लिङ्गजोऽयं संख्याप्रत्ययः, संख्याप्रतिबद्धलिङ्गस्य प्रत्यक्षसिद्धस्याभावात् । तत एव न
१० शब्दोऽयं प्रत्याक्षानुमानमूलः । योगिप्रत्यक्षमूलोऽयमिति चेत् । न । तस्य तथावगन्तुमशक्यत्वात् । ततोऽयं मिथ्याप्रत्ययो निरालम्बन एवेति । तदयुक्तम् । एवं हि तस्य देशादिप्रतिनियमो न स्यात् । कारणरहितत्वादन्यानपेक्षणात्सर्वत्र सर्वदा सत्त्वमसत्त्वं वा प्रसज्येत । निरालम्बनोऽपि समनन्तरप्रत्ययनियमात्प्रतिनियतोऽयमिति चेत् । न ।
१५ बहिःसंख्यायाः प्रतिनियतायाः प्रतीतेः । बहिर्वस्तुषु संख्याध्यवसीयमाना वासनामात्रहेतुका मिथ्याकल्पनात्मिकैव । आपेक्षिकत्वात्स्थविष्ठत्वादिधर्मवदिति चेत् । न । नीरूपेषु शशविषाणादिष्वपि तत्प्रसंगात् । तत्कल्पनास्वस्त्येवेति चेत् । तर्हि ताः कल्पनाः स्वरूपेणासत्याः सत्या वा । न तावदसत्याः । स्वमतविरोधात् ।
२० सत्याश्चेत्कथमिदानीं स्वरूपेण सत्यासु कल्पनासु संख्या परमार्थतो न स्यात् । तास्वपि स्वकल्पनान्तरारोपितापेक्षिकत्वाविशेषाद्बहिर्वस्तुष्विवेति चेत् । स्यादेवं यदि कल्पनारोपितत्वेनापेक्षिकत्वं व्याप्तं सिध्येत् । न चैवं वस्तुसत्स्वपि नीलादिरूपेष्वस्य प्रसिद्धेः । नीलनीलतरयोर्हि रूपयोर्यथा नीलापेक्षं नीलतरं रूपं तथा नीलतरापेक्षं नीलमिति
२५ नीलादिरूपेषु वस्तुसत्स्वपि भावादापेक्षिकतायां न कल्पनारोपितत्वेन व्याप्तिरवगम्यते । यतः संख्ययोर्बहिरन्तश्च नीलरूपत्वं

स्यात्। यदि पुनरस्पष्टावभासित्वे सत्यपेक्षिकत्वादिति हेतुस्तदा साधनविकलो दृष्टान्तः। स्थविष्ठत्वादिधर्माणां स्पष्टावभासित्वात्। तत्तत्र भ्रान्तमिति चेत्। न। बाधकाभावात्। स्थविष्ठत्वादिधर्मप्रतिभासो न स्पष्टो विकल्पत्वादनुमानादिविकल्पवदित्यनुमानं तद्बाधकमिति चेत्। न। पुरोवर्तिनि वस्तुनीन्द्रियजविकल्पेन स्पष्टेन व्यभि- ५
चारात्। तस्यापि पक्षीकरणादव्यभिचार इति चेत्। तर्हि संभाव्यव्यभिचारो हेतुः स्पष्टत्वेन विकल्पत्वस्य विरोधासिद्धेः। क्वचिद्विकल्पत्वस्यास्पष्टत्वेन दर्शनात्। स्पष्टत्वेन व्यभिचारात्तस्यापि पक्षीकरणादव्यभिचार इति चेत्। तर्हि संभाव्यव्यभिचारो हेतु स्पष्टत्वेन विकल्पत्वस्य विरोधासिद्धेः क्वचिद्विकल्पत्वस्यास्पष्टत्वेन दर्शनात्। १०
स्पष्टत्वेन विरोधे चन्द्रद्वयप्रतिभासे प्रतिभासत्वस्यासत्त्वेन दर्शनात्स्वसंवित्प्रतिभासस्यापि सत्यत्वं मा भूत्तथाविरोधासिद्धेरविशेषात्। अथ प्रतिभासत्वाविशेषेऽपि स्वसंवित्प्रतिभासः सत्यः शशिद्वयप्रतिभासस्त्वसत्य संवादाद्विसंवादाच्च प्रोच्यते। तर्हि विकल्पत्वाविशेषेऽपीन्द्रियजविकल्प स्पष्टः साक्षादर्थग्राहकत्वात्। नानुमानादिविकल्पोऽ- १५
साक्षादर्थग्राहकत्वादित्यनुमन्यताम्। तथा चेन्द्रियजविकल्पेन व्यभिचार एव। निर्विकल्पत्वादिन्द्रियजस्य ज्ञानस्य नेन्द्रियजो विकल्पोऽस्तीति चेत्। न। तस्य प्राक्प्रमाथितत्वात्। .... .... ....
विधे एव तथा व्यवह्रियते इति किं नाङ्गीकुरुष किमिति पक्षपातानपेक्षं न क्षणमीक्षसे। अथ न संस्थानविशेषस्वरूपाणि पृथुत्वा- २०
दीनि महत्त्वपरिमाणमेव ह्युत्तरदक्षिणे अपेक्ष्य पृथुसंकीर्णतयाऽध ऊर्ध्वं चापेक्ष्यागाधतया व्यवह्रियते तर्हि पूर्वपश्चिमे अपेक्ष्य महत्त्वमेव दीर्घह्रस्वत्वेन व्यवह्रियतामिति कथं चातुर्विध्यम्। किं च किमाकारः स पुमानिति संस्थानविशेषे प्रश्नेऽपि प्रोच्यते प्रांशुर्ह्रस्वो वेति। ततोऽ-
नयोः संस्थानरूपतैव ज्यायसी। अथैवं महत्त्वमपि संस्थानविशेष एव २५
स्यात्, न परिमाणमिति चेत्। मैवम्। अस्य निःशेषसंस्थानविशेषैः

सह वृत्तेः । अशेषमपि हि वृत्तत्र्यस्रचतुरस्रदीर्घह्रस्वपृथुसंकीर्णादिकं वस्तु महदुच्यत एव । संस्थानविशेषरूपत्वे तु महत्त्वस्य नैवं स्यात् । न हि संस्थानविशेषः संस्थानविशेषान्तरेणाशेषेण समानाश्रयः समुपलभ्यते । वृत्तत्वस्य त्र्यस्रचतुरस्रतादिपरिहारेण त्र्यस्त्र्यत्वादेर्वृत्तत्वचतुरस्रतादि-
५ परिहारेणावस्थितेः । न च महत्त्ववद्दैर्घ्यह्रस्वत्वे अपि समस्तसंस्थानविशेषसमावेशिनी । वृत्तत्र्यस्रादौ तदभावात् । न हि बदरापेक्षयामलकं दीर्घं व्यवहरन्ति प्रमातारः किं तु महदेवेति । एवं चापेक्षिकमणुत्वमपि संस्थानातिरिक्तपरिणामरूपमिति मन्तव्यम् । यत्पुनरनापेक्षिकमन्त्यमणुत्वं परमाणौ तस्यासंयुक्तद्रव्याधारत्वान्न संस्थानविशेषरूपताशंका-
१० मपि गच्छतीति सिद्धं द्वे एव परिमाणे इति । ताथागतं प्रति पुनारूपादिवदेतयोर्निशितमतिभिर्द्रव्यात्कथंचिदतिरेकिरूपयोः सिद्धिरिह वाच्या । यच्च नित्यमाकाशकालदिगात्मसु परममहत्त्वमित्युक्तम् । तदप्ययुक्तम् । आकाश एव । कथंचिदनित्यस्य तस्य भावात् । दिशोऽसत्त्वेन कालात्मनोरव्यापकत्वेनाकाशस्य कथंचिदनित्यत्वेन च
१५ निरूपितत्वात् । यदुदितम् ' अनित्यं त्र्यणुकादिद्रव्येष्वण्वपि नित्यानित्यविकल्पाद्विभेदम् ' इत्यादि तत्रापि वस्तूनां नित्यानित्यत्वेन साधनात्कथंचिदनित्यत्वमेव द्रष्टव्यम् । यदपि कुवलादौ भाक्तत्वमणुव्यवहारस्य व्याहारि । तदपि न चेतोहारि । महत्त्वव्यवहारस्यापि तत्र भाक्तत्वापत्तेः । अथाणुत्वव्यवहार एव भाक्तः । आपेक्षिकत्वात् ।
२० कुवले ह्यामलकमपेक्ष्याणुत्वं व्यवह्रियते न त्वणुत्वतस्तदण्विति चेत् । तर्हि तत एव महत्त्वव्यवहारो भाक्तोऽस्तु । तत्र सर्षपमपेक्ष्य महत्त्वव्यवहारात् । न पुनराकाशवत्तत्त्वतो महदिति समानम् । न च यदापेक्षिकं तेन भाक्तेनैव भवितव्यमिति नियमो नीलापेक्षया नीलतरस्वरूपस्यापेक्षिकस्याप्यभाक्तत्वात् । मुख्यस्य नीलतरत्वस्य तत्रानुभ-
२५ वात् । अथ यदि तत्राणुत्वं तात्त्विकं स्यात्तदा महत्त्वाभाव एव भवेत् । अणुत्वमहत्त्वयोरेकत्र विरोधात् । तथा च कुवलादेरचाक्षुत्वमेव स्यात् ।

महत्त्वाभावात् । '**महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिः**' इति वचनादिति चेत् । तदसंबद्धम् । विरोधस्यासिद्धेः । भिन्नभिन्नरूपेण तयोस्तत्रावस्थानात्सामान्यविशेषवत् । यदि हि यथामलकाद्यपेक्षया कुवलेऽप्यणुत्वं तथा तदपेक्षयैव महत्त्वमप्यधीयेत तदा स्याद्विरोध-संरोधः । नचैवं सर्षपाद्यपेक्षयैव तत्र महत्त्वव्यवहारात् । एवं च समिदि- ५
क्षुवंशादिषु ह्रस्वव्यवहारस्य भाक्तत्वमपाकरणीयम् । यदुक्तम्–'संयुक्त-मपि द्रव्यं यद्वशात्' इत्यादि तदपि न सहृदयसंवादि । अपोद्धारव्य-वहारस्य परस्पराभावादेव सिद्धेः । पृथक्त्वकल्पनाया निष्प्रमाणकत्वात् । ननु कथमभावस्येदमतः पृथगिति विधिप्रत्ययविषयत्वं संगच्छते, तस्येदं न भवतीत्यादिप्रतिषेधप्रत्ययस्यैव गोचरत्वेन प्रसिद्धेरिति चेत् । नैवम् । १०
इयं छायेत्यभावेऽपि विधिप्रत्ययस्य त्वया स्वीकारात् । यस्तु नील-रूपारोपस्वरूपां छायामाह–तस्य घटप्रध्वंसोऽत्रेति कथं विधिप्रत्ययः । अथ प्रध्वंसो नाशोऽभाव इति तत्प्रत्ययोऽभावप्रत्यय एव तर्हि पार्थ-क्यमप्यन्यस्यान्यस्वरूपत्वप्रतिषेध इति तत्प्रत्ययोऽप्यभावप्रत्ययः किं न स्यात् । यत्तु व्योमशिवो व्याजहार–'**नैवं पदार्थान्तरावधिं विनै-** १५
**कत्वादिसंख्याविशिष्टस्य पृथगिति व्यवहारस्य ततोऽर्थान्तरत्वात् । तथा हीतरेतराभावविशिष्टो व्यवहारः पदार्थान्तरावधित्वेन प्रवर्तते । न चैकत्वादिसंख्यानुरक्तस्तद्विलक्षणश्चायमित्यर्थान्तरनिमित्तः**' इति तदपि स्वसिद्धान्तश्रद्धाविजृम्भितम् । वैलक्षण्यासिद्धेः । पृथक्त्वव्यव-हारस्याप्ययमस्मात्पृथगिति सावधित्वेनैव प्रवृत्तेरितरेतराभावस्यापि २०
क्वचिदेकस्य द्वयोर्बहूनामत्राभाव इति संख्यानुरक्तत्वेन प्रतीतेः । नियमेन तु पृथक्त्वव्यवहारोऽपि न । तथायमस्मात्पृथगिति संख्योल्लेखमन्तरेणापि भावात् । अथायमित्येकवचनेनोल्लिख्यमानैक-त्वसंख्यास्त्येवात्रेति चेत् । अयमयं न भवतीत्यत्राप्येवमस्तु । यत्तू-दयनः प्राह–'**पृथगादिशब्दाः पर्याया इत्यनुमन्यामहे न त्वभावार्था** २५

१ वै. द. ४।१।६ ।

**इति पञ्चम्या सम्बन्धानुपपत्तेर्न हि घटात्पटः पृथगिति घटात्पटो न भवतीति वाक्यार्थः** ' इति तदपि न कुशलाय । यतो यदि पञ्चमीसंबन्धानुपपत्तिमात्रेणैतेषां शब्दानां सर्वथाप्यभावार्थत्वं प्रतिषिध्यते तदा षष्ठीसंबन्धानुपपत्त्याऽभावशब्दस्याभावार्थत्वमपि कथं
५ स्यात् । न हि घटस्याभावोऽत्रास्तीति घटस्यात्र नास्तीत्यपि वाक्यार्थः संगच्छते । किं तु घटोऽत्र नास्तीति । ततः कथमभावशब्दस्याभावार्थत्वं स्यात् । अथ घटस्याभावोऽत्रेत्यभावोऽल्लेखिनी प्रतीतिः । न चात्राभावशब्दस्याभावोऽभिधेय इति महच्चित्रम् । अयमस्मात्पृथगित्यन्यत्रान्यस्य स्वरूपाभावोल्लेखिनी प्रतीतिः । न चात्र
१० पृथक्शब्दस्याभावोऽभिधेय इति किं न चित्रम् । अथ घटोऽत्र नास्तीति नञोऽभावद्योतकत्वात्कर्तृवाचकेन घटशब्देनैव क्रियाया अभिसंबन्धः । ततश्च प्रथमैव घटशब्दात् । घटस्याभावोऽत्रास्तीत्यत्र त्वभावशब्देन कर्तृवाचकेन क्रियाया अभिसंबन्धसंभवात् । तत एव प्रथमा । तत्संबन्धत्वेन तु घटशब्दात्षष्ठी । तात्पर्यं प्रति तूभ-
१५ यत्रापि नास्ति विशेषः । तर्हि घटः पटो न भवतीत्यत्रापि नञो द्योतकत्वेनान्यार्थत्वाभावान्न तद्योगे घटशब्दात्पञ्चमी । पृथक्शब्दस्य तु वाचकत्वेनान्यार्थत्वात् ' अन्याराद्वितरर्ते '[1] इत्यनेन द्योतने ततः सा भवत्येव । तात्पर्यं प्रति तूभयत्रापि नास्ति कश्चिद्विशेष इति सर्वं तुल्यम् । यदा तर्हि घटे पटस्याभाव इत्यभावध्वनेर्वाचकस्य
२० प्रयोगस्तदा कथं न पञ्चमीति चेत् । अस्याप्यन्यार्थत्वाभावात् । स एव ह्यन्यार्थः शब्दो योऽर्थान्तराभावोपहितेऽर्थान्तरे वर्तते । यथा घटात्पटः पृथगित्यत्र घटाभावोपहिते पटे वर्तमानः पृथक्शब्दः । न चाभावशब्दस्तथा । सर्वदाऽभावमात्रनिष्ठत्वात् । न हि भवति घटे पटोऽभाव इति । किं तु पटस्याभाव इति । यदा तर्ह्यपटो घट इत्यु-
२५ च्यते तदानीमपटशब्दोऽभावोपहितपदार्थान्तरवाचकोऽन्यार्थोऽस्त्येव ।

---

[1] पा. सू. २।३।२९ ।

पटाभावोपहितघटप्रतिपादकत्वादिति कथं नात्र पञ्चमीति चेत् । ननु कुतः शब्दादत्र पञ्चमी प्रेर्येत किमपटशब्दाद्धटशब्दाद्वा । नाद्यः पक्षः । अन्यार्थशब्दयोगे शब्दान्तरादेव पञ्चमीप्रयोगप्रतिपादनात् । न हि घटः पटात्पृथगित्यत्र पृथक्शब्दादेव पञ्चमीं प्रयुज्यते । नापि द्वितीयः । यतो यस्यान्यार्थेन शब्देन साक्षात्संबन्धो न भवति तस्मादेवेयं पञ्चमी विधीयते । यथा घटः पटात्पृथगित्यत्रैव घटात् । न चात्रापटशब्द-स्तथा । तस्य साक्षाद्धघटशब्देनैव संबन्धात् । न चात्र शब्दान्तर-मस्ति यतः पञ्चमी शङ्क्येत ततोऽपटशब्दस्याप्यन्यादिशब्दैः समानयोग-क्षेमत्वासंभवान्नान्यार्थत्वम् । अपि च पृथगादिशब्दाः पर्याया इत्यत्रेतर-शब्दोऽपि पृथक्शब्दसमानार्थतया संमतस्ते । इदमस्मात्पृथगन्यदर्था-न्तरमितरद्भिन्नमिति त्वयैव स्वग्रन्थेऽभिधानात् । तच्चासंगतम् । इतरध्वनेरन्यार्थतायाम् 'अन्यारादितरर्ते' इत्यत्रान्यार्थत्वेनास्य गतत्वान्न भिन्नस्योपादानं स्यात् । अथापोद्धारव्यवहारापेक्षया तस्य पर्यायता द्वयोरुपलक्षितयोरेकतरवचनत्वरूपेण तु विशेषेणेतरशब्दः सूत्रे भेदे-नोद्दिष्टः । तर्हि तदपेक्षयैव नञादेरपि पर्यायतास्तु । द्योतकत्वादिना तु विशेषेण सूत्रेऽन्यार्थत्वेन न गृह्यत इति किं न स्यात् । पृथक्त्वगु-णाकक्षीकरणे चायं विशेषलाभो यद्गुणः कर्मणः पृथग्गुणकर्मणी सामान्याद्गुणकर्मसामान्यानि विशेषेभ्यो गुणकर्मसामान्यवि-शेषाः समवायादित्यस्खलद्गतिरनुभूयमानः पृथक्त्वव्यवहारोऽनुपचरित-वृत्त्यैव समर्थितः स्यात् । अन्यथा तु द्रव्येष्वेव पृथक्त्वस्य भावात्तत्रैव तत्प्रत्ययो मुख्यः स्यादिति । यच्च '**अप्राप्तिपूर्विका प्राप्तिः संयोगः**' इत्युक्तं तत्रापि यदा प्राग्भाविसान्तरत्वस्वरूपपरिणामपरित्यागेन निर-न्तररूपतया यः कथंचित्तादात्म्यपरिणामः स संयोगः संमतस्तदा न कश्चित्प्रत्यर्थी । नैरन्तर्येण परिणतानि हि वस्तूनि संयुक्तव्यव-हारगोचरतां प्रतिपद्यन्ते । निरन्तरावस्थितदेवदत्तयज्ञदत्तगृहवत् । ननु नायं दृष्टान्तः कान्तः । स्तम्भाद्यनेकपदार्थसंयोगस्वभावयोर्गृहयोः

संयोगगुणाश्रयानुपपत्तेः । निर्गुणत्वाद्गुणानामिति चेत् । नैवम् । गृहस्यावयवित्वेन संयोगगुणत्वायोगात् । कथं पृथ्वीपाथस्तेजसांविजातीयानामारम्भकत्वमिति चेत् । नीलधवलादितन्तूनां कथं पार्थिवा एवामी सर्वेऽपीति चेत् । पृथिवीपाथस्तेजांस्यपि द्रव्याणि किं न ५ भवन्ति द्रव्यत्वेन सजातीयत्वे कालाकाशादिद्रव्यान्तरमपि तदारम्भकं स्यादिति चेत् । पार्थिवत्वेन सजातीयत्वे मृत्स्नादिकमपि किं न पटारम्भकं स्यात् । तन्तुत्वेन सजातीयत्वमत्र विवक्ष्यत इति चेत् । अत्रापि पौद्गलिकत्वेनेति विद्धि । पौद्गलिकत्वेन सजातीयत्वे पर्वतसमुद्रारम्भः प्रभृतिकमपि गृहारम्भकं भवेदिति चेत् । तन्तुत्वेनापि १० सजातीयत्वे पर्वततुल्यस्तन्तुकूटोऽपि पटारम्भकः किं न भवेत् । भवत्येव यदि तावत्परिमाणपटनिष्पादननिपुणस्तन्तुवायः स्यादिति चेत् । इतरत्रापि भवत्येव तद्गृहारम्भकं यदि तथाविधः सूत्रधारः स्यात् । यथा तु भूयांसस्तन्तुवायास्तदंशैर्भूयसः पटान्निष्पादयन्तीति संभाव्यते तथान्यत्रापि संभावनेयमनिवार्या । ननु पौद्गलिकोऽप्यौर्व- १५ वन्हिर्न कदाचिद्गृहारम्भको दृष्टस्तर्हि जरत्तरतन्तुसंन्तानः पटारम्भकः कदाप्यालोकि । यथा तु नूतनपरिणामापन्नानां प्रागारम्भसामर्थ्यं तेषामासीत्तथौर्वानलादेरपि परिणामान्तरापन्नस्य तदासीदेवेति सर्वं तुल्यम् । एवं च गृहं द्रव्यं सजातीयद्रव्यारभ्यत्वात्पटवदिति सिद्धम । तथा च सिद्धस्तत्र संयोगः । न च सन्नप्यसौ भिन्न २० एव भविष्यतीति वाच्यम् । तथानीक्षणाद्भिन्नत्वाविशेषेण चैत्रकुण्डलसंयोगस्यापि मैत्रकुण्डलसंयोगापत्तेश्च । तत्र तस्य समवायान्न कश्चिद्दोष इति चेत् । सिद्धस्तर्हि कथंचिदव्यतिरेकः कथंचिदविष्वग्भावादन्यस्यास्य निराकरिष्यमाणत्वात् । यस्तु संयोगं स्वरूपतोऽपि पराकुरुते सौगतस्तस्य संयुक्तावेताविति प्रत्ययः २५ किमालम्बनः स्यात् । न तावद्रूपालम्बनः । तत्प्रत्ययविलक्षणत्वाद्रूपादिनिमित्तो हि प्रत्ययो नीलं पीतमित्याकारेणैवोल्लसेत् । अस्तु तर्हि

निरालम्बन इति चेत् । कुतोऽस्योत्पत्तिः । वासनापरिपाकादिति चेत् । नीलादिप्रत्ययोऽपि तत एवास्तु । नीलादेर्विकल्पस्तत एवानुभवस्त्वर्थादिति चेत । संयोगानुभवोऽपि तत एवास्तु । नास्त्येव संयोगरूपोऽर्थ इति कुतस्तदनुभवः स्यादिति चेत । नीलादिरूपोऽर्थः कुतः स्यात् । प्रतिभासस्तु यथैकस्य तथान्यस्याप्यस्त्येव द्रव्यैकदेशत्वनिमित्तः संयोगप्रतिभास इति चेत । मैवम् । एकस्य देशस्य सौगतानामभावात् । द्रव्यनैरन्तर्यनिबन्धनोऽयमिति चेत । अन्तराभावो यदि तुच्छस्तदा न किंचिदनेनोक्तं स्यात् । अथातुच्छस्तदा संयोगहेतुक एवायमुक्तो भवेत, इति सिद्धः संयोगः । यस्तु चिरोत्पन्नस्य संयोगजः संयोगो न्यगादि । नायमवदातः । कर्मजन्वात्तस्य । हस्ताद्यवयवक्रियायां तद्विष्वग्भूतस्यावयविनोऽपि कथंचित्क्रियायाः प्राक्प्रसाधितत्वात् । यदपि 'अप्राप्तिपूर्विका' इत्याद्यवादि तत्रापि यदि नैरन्तर्यपरिणामपरित्यागेन सान्तररूपतया परिणतिर्विभागोऽभिधीयते तदा न विवादः । अन्यत्तु सर्वं संयोगवद्वितर्कणीयम् । यस्तु विभागजो विभागः समर्थित नासौ संगच्छते । ननूक्तं तत्सिद्धौ साधनम् । द्रव्यारम्भकसंयोगविरोधिविभागोत्पादकत्वादिति । सत्यं किं त्वनैकान्तिकम् । यदा हि भुजगद्रव्ये विफणपरिहारेणोत्फणत्वमुपजायते तदा तावत्तदवयवेषु क्रियानभोभागेभ्यो विभागं करोतीति त्वयापि प्रतिपद्यते । सा च द्रव्यारम्भकसंयोगविरोधिविभागोत्पादिकैवेति कुतो नानेकान्तः । ननु भुजगद्रव्यमुभयदशायामपि तदेव । तथैव प्रत्यभिज्ञानादिति नास्या स्तादृशविभागोत्पादकत्वमिति चेत् । तर्हि वंशेऽपि पाट्यमाने दारुद्रव्यं वंशदलदशायां तदेव तत एव हेतोरित्यन्यत्रापि नास्यास्तदुत्पादकत्वं स्यात् । तथा चासिद्धो हेतुर्भवेत् । वंशद्रव्यं तावद्विनष्टमेवेति चेत् । अन्यत्रापि विफणद्रव्यं विनष्टमेव । यदि तत्र तद्विनाशः कथं फणित्वेन प्रत्यभिज्ञानमिति चेत् । अन्यत्रापि यदि वंशविनाशः कथं दारुरूपतया प्रत्यभिज्ञानमिति समानम् । ननु विफणिता फणिद्रव्या-

वस्थैव न द्रव्यं वंशोऽपि दारुद्रव्यावस्थैव न द्रव्यमिति किं न स्यात्। वंशस्य द्रव्यत्वं त्वयापि स्वीकृतमिति चेत्। न केवलमस्यैव। विफणद्रव्यस्यापि। ननु विफणता यदि द्रव्यं न तदा भावप्रत्ययेन तन्निर्दिश्येतेति चेत्। वंशोऽपि
५ यदि द्रव्यं तदा दारुद्रव्यस्य वंशतेति कथं भावप्रत्ययेन निर्दिश्यते। यथा च दारुद्रव्यपर्यायतामपेक्ष्य तथा निर्देशो द्रव्यत्वं पुनरपेक्ष्य वंश इति निर्देशस्तथाऽन्यत्राप्येकत्र विफणता। अन्यत्र तु विफणं द्रव्य-मित्यभिधीयता को दोषः। ननु वंशस्य स्वकीयनवपुराणादिपर्याय-परम्परापेक्षया द्रव्यत्वं युज्यतां नाम। विफणद्रव्यस्य तु तत्कथमिति
१० चेत्। नन्वत्रापि सन्त्येवाच्छ्वासनिश्वासा अन्ततः प्रतिक्षणभाविनः शुद्धपर्यायरूपा अर्थपर्यायान्तदपेक्षया तत्किं न भविष्यति। ततः सिद्धमिदं विफणद्रव्यावयवक्रिया द्रव्यारम्भकसंयोगविरोधिभागोत्पा-दिका नभोभागविभागकारिणी चेति सिद्धो व्यभिचारः। कथमेकैव क्रियावयवविभागमाकाशावयवविभागमुत्तराकाशसंयोगं च कर्तुं शक्तेति
१५ चेत्। तत्किमेकेन वस्तुनैकमेव कार्यं कर्तव्यं, तथात्वे हि कथम-कोऽपि प्रदीपस्तैलापहारं तिमिरसंहारं कज्जलभारं स्वगोचरं ज्ञानं च कर्तुं समर्थः स्यात्। ततो विचित्रशक्तयो भावा विचित्राणि कार्याणि कर्तुमीशत एव। विकसत्कमलदलरूपो व्यतिरेकदृष्टान्तोऽपि साधना-व्यावृत्तः संकुचितकमलद्रव्यदलेषु क्रियाया द्रव्यारम्भकसंयोगविरोधि-
२० विभागोत्पादकत्वात्तद्विनाशेन विकस्वरत्कमलद्रव्यान्तरस्यैवोत्पत्तेः। कालात्ययापदिष्टता चास्य हेतोरनुमानबाधितप्रतिज्ञानन्तरं प्रयुक्तत्वात्। तथा हि विवक्षितावयवक्रिया, आकाशदेशेभ्यो विभागं करोति। क्रियात्वात्, यैवं सैवम्। यथाङ्गुलिक्रिया। तथा चेयं तस्मात्तथेति। न चात्र तथाविधविभागजनकत्वक्रियात्वयोः सहभावमात्रं न व्याप्ति-
२५ रिति वाच्यम्। व्यभिचारादर्शनात्। तदप्युपाधेरनुपलम्भात्। अन्यथा धूमादावपि कार्यकारणभावस्य शङ्क्यमानौपाधिकत्वेन व्याप्त्य-

भावापत्तेः । एतेन ' यदि हि भिद्यमानवंशाद्यवयविद्रव्यस्य ' इत्यादि प्रत्युक्तम् । योऽपि कारणाकारणविभागाद्विभागोऽभ्यधायि सोऽपि नोपपद्येत । करक्रियायां सत्यामवश्यमवयविनि क्रियायाः प्राक्प्रसाधनात्, इति कर्मज एव विभागोऽस्ति न विभागजः । यदुक्तं 'परत्वमपरत्वं च' इत्यादि तत्र परत्वापरत्वे रूपादि च पदार्थैः सहैवोत्पद्येते । न त्वपेक्षा- ५
बुद्धिवशात्पश्चात् । तस्या द्वित्वादाविवाभिव्यञ्जकत्वेनैव व्यवस्थितेः ।
किं च कालापेक्षयोः परत्वापरत्वयोरपेक्षाबुद्धिकाले कथमुत्पत्तिरुपपद्यते ।
युवस्थविरपिण्डयोर्हि परापरकालप्रदेशाभ्यां संयोगस्तदुत्पादकोऽकथि ।
न च यदा देवदत्तस्यापेक्षाबुद्धिस्तदा तौ विद्येते यतस्ताभ्यां तत्संयोगः
स्यात् । कालस्य नित्यत्वात्तदापि तौ स्त एवेति चेत । ननु कालस्य १०
नित्यत्वे तयोरभाव एव भवेत् । ननु तदानीं सतानित्यस्यैकरूपत्वेन
देशासंभवात् । यौ तु कल्पितौ देशौ तौ तदानीमसन्तावेवेति कथं
ताभ्यां तत्संयोगः स्यात् । अपि च परत्वापरत्ववन्मध्यममिति व्यवहा-
रकारणं मध्यमत्वमपि किं न कक्षीक्रियते । ननु कुतः कारणादस्यो-
त्पत्तिः स्यादिति चेत् । यत एव तदाधारभूतस्य पदार्थस्य । कुतो वा १५
परत्वापरत्वयोरप्युत्पादो निगद्यते । अपेक्षाबुद्धेर्निमित्तात्परापरदिक्का-
लप्रदेशसंयोगादसमवायिकारणाच्चेति चेत् । न त्विदमप्यपेक्षाबुद्धेर्मध्यम-
दिक्कालप्रदेशसंयोगाच्चोत्पत्स्यते को दोषः । केवलमियमपेक्षाबुद्धिः
संनिकृष्टासंनिकृष्टोभयगोचरेति मध्यमौ दिक्कालौ न कौचिद्विद्येते
इति चेत् । किं मध्यस्थपदार्थदेशे तयोरसत्त्वान्नित्यव्यापकत्वात्तथा २०
व्यवहाराभावाद्वा । नाद्यः पक्षः । अनभ्युपगमात् । न द्वितीयः ।
परापरदिक्कालयोरप्यभावापत्तेः । न तृतीयः । मध्यमादिक्प्रदेशो मध्या-
ह्नोऽयमिति दिक्कालप्रदेशायास्तद्व्यवहारदर्शनात् । यथा च मध्यमत्व-
मुपचरितमनयोस्तथा परत्वापरत्वे अपीति मध्यमत्वमपि वा गुणत्वेन
स्वीकरणीयम् । परत्वापरत्वे अपि वा तत्त्वेन त्यज्येताम् । नान्तराव- २५
स्थातुं लभ्यते । शेषमनयोर्द्वित्वादिवद्दूषणीयम् । तद्वदेव चैते ताथा-

रन्यतरस्य चापृथगाश्रयाश्रयित्वलक्षणः परस्परपरिहारेणान्यत्राश्रये समवायोऽयुतसिद्धिः । द्वयोः पृथगाश्रयाश्रयित्वं घटपटयोः शकुन्याकाशयोश्चान्यतरस्य शकुनेः पृथगाश्रयाश्रयित्वं यद्यप्यन्यतर-पृथग्गमनमप्यस्ति तथापि तस्य पृथग्गमनस्य न ग्रहणम् । नित्यविष-
५ यत्वात्तस्य । यदि पुनरनित्यानामपि पृथग्गमनं युतसिद्धिरुच्येत । तदा त्वगिन्द्रियशरीरयोः पृथग्गमनाभावादयुतसिद्धत्वं भवेत् । ततश्च तयोः परस्परसंयोगो न स्यात् । तस्य युतसिद्धिव्याप्तत्वात् । न चायं तत्र नास्ति कुण्डबदरादिवत्तस्यैव तत्र युज्यमानत्वात् । तस्मादनित्यानां न पृथग्गमनं युतसिद्धिः । नित्येषु पुनराश्रयाभावादेव पृथगाश्रयाश्रयित्वं
१० नास्तीति तेषां पृथग्गमनमेव युतसिद्धिः । न त्वनित्यानां पृथगाश्रया-श्रितत्वरूपायां युतसिद्धावभिधीयमानायां घटपटवत्तन्तुपटयोरपि युतसिद्धिरेव भवेत् । पटस्य तन्तुषु तेषां च स्वांशुषु वृत्तेरिति चेत् । नैवम् । यतो यत्रोभयोः परस्परपरिहारेण पृथ-गाश्रयाश्रयित्वं तत्र युतसिद्धिर्विवक्षिता । न चेयमत्रास्ति पटस्य
१५ तन्तुष्वेवाश्रितत्वात् । तत एवंविधयुतसिद्धिद्वयविपरीताऽयुतसिद्धिः सुघटैव । सिद्धिशब्देन चात्र गमनं निष्पत्तिश्च वाच्यमिति । तदपि नोपपद्यते । दिक्कालाकाशात्मनां नित्यसम्बन्धिनां व्यापकतया द्वयोरेकस्य वा परस्परसंयोगविभागहेतुभूतकर्मसमवाययोग्यतारूपयुतसिद्धेरभावेना-युतसिद्धिप्रसंगादित्यतिव्यापनीयमयुतसिद्धिः । चक्रकापत्तिश्चात्र ।
२० तथा हि—समवायसिद्धौ द्वयोरेकतरस्य वा संयोगविभागहेतुभूतकर्म-समवाययोग्यत्वरूपाया द्वयोरेकतरस्य वा परस्परपरिहारेणान्यत्राश्रये समवाय इत्येवंरूपायाश्च युतसिद्धेः सिद्धिः । तत्सिद्धौ च तद्वैपरी-त्येनायुतसिद्धिरिति । अपि च येयं घटपटयोः पृथगाश्रयाश्रयित्वयुत-सिद्धिः प्रागभ्यधायि, नेयमुपपत्तिमती । कपालकलशयोस्तन्तुपटयोश्च
२५ यथाक्रममाश्रयाश्रयित्वयोरप्रसिद्धेः । न हि कपालानि तन्तवश्चाश्रयो घटः पटश्चाश्रयीति कस्यचित्प्रसिद्धम् । कथमेवमिह कपालेषु घट

इह तन्तुषु पट इति प्रतीतेरुत्पत्तिरिति चेत् । कस्येयं प्रतीतिरुत्पद्यते स्वदर्शनाहितसंस्कारस्य भवतोऽपक्षपातिनोऽन्यस्यापि वा । नाद्यपक्षः । तथात्वेऽस्याः कल्पनामात्रत्वप्रसंगात् । न च कल्पनायाः पदार्थस्वरूपानुरोधः । तस्याः स्वातन्त्र्यवृत्तित्वात् । ततो वस्तुव्यवस्थापने व्यवस्थाप्रसक्तेः भवत्कल्पितस्यापि वस्तुनोऽन्यथान्येन कल्पयितुं शक्यत्वात् । द्वितीयपक्षे त्वसिद्धिः । तन्तुसमुदायात्मायं पट इति पटेऽत्र तन्तव इति वा सर्वेषां प्रतीत्युत्पत्तेः । एवं च पृथगाश्रयाश्रयित्वरूपयुतसिद्धेरसिद्धेः कथं तद्वैपरीत्येनायुतसिद्धिः सिध्येत् । कन्दलीकारोऽप्येतादृशीमेवायुतसिद्धिमभिदधानोऽनेनैव निरस्तः । यत्तूदयनः प्राह— 'अयुतसिद्धाः प्राप्ताश्च ते सिद्धाश्चेत्ययुतसिद्धाः प्राप्ता एव सन्ति न वियुक्ता इति यावत्तेषां संबन्धः प्राप्तिलक्षणः समवायस्तेन संयोगो व्यवच्छिन्नस्तस्याप्राप्तिपूर्वकत्वादजसंयोगाभावो वक्ष्यते' इति तदस्यात्यन्तव्युत्पन्नमन्यस्यातिसंस्कृतवातूलब्राह्मणविशेषवत्केवलमनर्थाय शरीरत्वगिन्द्रिययोर्घटाकाशयोराकाशात्मनोश्च प्राप्तयोरेव सिद्धयोरयुतसिद्धत्वेन समवायप्रसंगात् । अस्तु वा यथाकथञ्चिदयुतसिद्धत्वं तथापि कोऽत्र व्यवच्छेद्यव्यवच्छेदकभावः । अत्र श्रीधरस्तावद्व्याहरति— 'अयुतसिद्धयोः संबन्ध इत्युच्यमाने धर्मस्य सुखस्य च यः कार्यकारणभावलक्षणः सम्बन्धः सोऽपि समवायः प्राप्नोति । तयोरात्मैकाश्रितयोर्युतसिद्ध्यभावात्, तदर्थमाधारमाधार्यभूतानामिति पदम् । न त्वाकाशशकुनिसंबन्धनिवृत्त्यर्थमयुतसिद्धिपदेनैव तस्य निवर्तित्वात् । एवमप्याकाशस्याकाशशब्दस्य च वाच्यवाचकभावः समवायः स्यात्तन्निवृत्त्यर्थमिहप्रत्ययहेतुः' इत्येतावतैवास्याभिमतसिद्धेः । न चैवं धर्मसुखयोः कार्यकारणभावस्य .... .... ....

१ न्या. कं. पृ. १४ पं. १। २ किरणावल्यां पृ. १३३. मूले पाठभेदो वर्तते। न्या. कं पृ. १४ पं. १८।

.... नानैव विशेषणेन किंचित् । व्योमशिवानुसारी तु वक्ति-
' अयुतसिद्धानामित्येकं लक्षणं, आधार्याधारभूतानामिति तु द्विती-
यम् । पदद्वयस्याप्यस्य सावधारणस्य व्याख्यानात् । तथा ह्ययु
.... .... .... .... .... द्धयोर्घटस्त-
५ द्वाचकशब्दयोस्तु युतसिद्धयोर्वाच्यवाचकभावः । आत्मतद्गोचराहमिति-
ज्ञानयोरयुतसिद्धयोर्घटतद्गोचरज्ञानयोस्तु युतसिद्धयोर्विषयविषयिभाव
इति । तथा, आधार्याधारभूतानामेव यः सम्बन्धः स समवायः । न
चं संयोगो वाच्यवाचकभावो विषयविषयिभावश्चाधार्याधारभूतानामेव
भवति । अन्यथाभूतानामपि भावानां तद्दर्शनादिति न हे ....
१० .... यः स सम्बन्धकार्यो यथेह कुण्डे दधीनि प्रत्ययः । तथा
चायमबाध्यमानेहप्रत्ययस्तस्मात्सम्बन्धकार्य इति । तदपि नोपपद्यते ।
यतो यदि वाच्यवाचकभावादिना सामान्येनैव व्यभिचार उद्भाव्येत
तदाऽवधा .... .... .... .... .... .... ....
द्भावनं तदा कथमेतत्स्यात् । यः खलु विशिष्टो वाच्यवाचक-
१५ भावादिः संबन्धः सोऽयुतसिद्धानामेवाधार्याधारभूतानामेव चेति
नानेनावधारणेन तस्य व्यवच्छेदः । अपि चाधार्याधारभूताना ....
.... .... .... .... .... .... .... मिति विशेषणं
सिध्यति । तत्सिद्धौ च समवायसिद्धिरिति । द्वितीयपक्षे तु किं सम-
वायेन कर्तव्यमाधाराधेयभावेनैव पर्याप्तत्वात् । यच्चा .... .... ....
२० .... .... ....नानार्थविशेषणत्वं नाना । न पुनः सत्त्वम् ।
तस्य ततो भेदादिति चेत् । तर्हि घटादिविशेषणत्वाधारत्वेन सत्त्वस्य
प्रतीतौ सर्वार्थविशेषणत्वाधारत्वेनापि प्रतिपत्तेः । स एव संशयापायः
स चार्थसंशयापायः सर्वार्थविशेषत्वाधारत्वस्य ततोऽनर्थान्तरत्वात् ।
तस्यापि नानारूपस्य सत्त्वाद्भेदेनार्थविशेषणत्वाधारत्वमपि नानारूपं
२५ सत्त्वाद्भिन्नमेष्टव्यम् । तथा तदाधारत्वमपीत्यनवस्थापत्तिः । पर्यन्ते
तस्य ततोऽनर्थान्तरत्वे प्रथमत एव नानार्थविशेषणत्वान्नानारूपादन-

र्थान्तरत्वसिद्धिः । सिद्धं नानास्वभावं सत्त्वं सकृन्नार्थविशेषणं तद्व-त्समवायोऽस्तु । अनेन द्रव्यत्वादिसामान्यं द्वित्वादिसंख्यानं पृथक्त्वा-दिकमवयविद्रव्यमाकाशादि विभुद्रव्यं च स्वयमेकमपि युगपदने-कार्थविशेषणमिति निरस्तम् । सर्वथैकस्य तथाभावविरोधसिद्धेरिति । समवायस्य नानात्वेऽनित्यत्वप्रसंगः संयोगवदिति चेत् । न । आत्म- ५ भिर्व्यभिचारात्कथंचिदनित्यत्वस्येष्टत्वाच्च । किं चायं सम्बन्धि-भ्योऽत्यन्तभिन्नमूर्तिः सन्समवायः कथं तैः सह सम्बध्येत यतस्त-द्विशेषणतया चकास्यात् । न ह्यसम्बद्धं विशेषणं नाम । अतिप्रसंगात् । अभावस्यापि कथञ्चिदविष्वग्भूततया प्राक्प्रसाधितस्य विशेषणतोपपत्तेः। ततोऽयमपि विशेषणं सन्केन सम्बन्धेन सम्बध्येत । न तावत्संयोगेन । १० तस्य गुणत्वेनाद्रव्यस्वभावे समवाये संभवाभावात् । नापि समवाया-न्तरात् । तस्यैकरूपतयाभ्युपगमात् । नापि विशेषणविशेष्यभावात् । यतः कोऽयं विशेषणविशेष्यभावो नाम । षट्पदार्थेभ्योऽतिरिक्तोऽ-नतिरिक्तो वा । अतिरिक्तो भावरूपोऽभावरूपो वा । न ताव-द्भावरूपः । षडेव पदार्था इति नियमविघातप्रसंगात् । नाप्यभावरूपः । १५ अनभ्युपगमात् । अनतिरिक्तोऽपि किं द्रव्यरूपो गुणादिस्वभावो वा । नाद्यः पक्षः । गुणाद्याश्रितत्वाभावप्रसंगात् । अत एव न गुणकर्म-स्वभावोऽपि । नापि सामान्यादिरूपः । तेषु तदभावप्रसंगात् । न हि सामान्यादौ सामान्यादित्रयं संभवति । अनवस्थादिदोषोपनिपातात् । ततो नायं विशेषणविशेष्यभावः परस्य कश्चिद्घटते । अस्तु वायं २० कश्चित्तथापि समवायसमवायिभ्यो यद्यभिन्नस्तदा समवायसमवायिनां तादात्म्यसिद्धिरभिन्नात् । अभिन्नानां तेषां तद्वद्भेदविरोधाद्भिन्न एवेति चेत् । नन्वयमप्यत्यन्तं भिन्नः कुतस्तत्रैव नियम्येत । समवाया-च्चेदितरेतराश्रयः । सिद्धे हि समवायनियमे ततो विशेष्यभावनियमसिद्धिः। तत्सिद्धौ च समवायनियमसिद्धिरिति । परस्माद्विशेष्यविशेषणभावादिति २५ चेत् । तर्हि पर्यनुयोगोऽनवस्था च । सुदूरमपि गत्वा स्वसंबन्धिभिः

संबन्धस्य तादात्म्योपगमे परमतप्रसिद्धिः। अथात्यन्तभिन्नमूर्तिरपि समवायः स्वत एव संबन्धिभिरभिसंबध्यत इति चेत्। पदार्था अपि स्वत एव परस्परमभिसंबद्धा भवन्तु। किममुना कर्तव्यम्। अथ समवाय एव स्वतोऽभिसंबध्यते संबद्धरूपत्वात्। न पदार्थास्तद्वि-
५ परीतत्वात्। यथा दहन एव स्वतो दहति दहनरूपत्वात्। न पुनरन्ये पदार्था इति। प्रयोगः— समवायः संबन्धान्तरं नापेक्षते स्वयं संबन्धत्वात्, यस्तु नैवं यथा घटादिः। स्वयंसंबन्धश्च समवायस्तस्मात्संबन्धान्तरं नापेक्षत इति। तदप्ययुक्तम्। संयोगेनानेकान्तत्वात्। स हि स्वयंसंबन्धः संबन्धान्तरापेक्षश्च। ततः समवायस्य संबन्धि-
१० भ्योऽत्यन्तभेदाभ्युपगमे संबन्धासिद्ध्या विशेषणत्वाभावप्रसंगात्। कथंचित्तादात्म्यपरिणामेनावभासमानोऽयं गुणादिवद्वस्तुपर्यायस्वरूपः स्वीकर्तव्यः।

षष्ठोऽपि नाभ्येति ततः पदार्थः सद्युक्तिकोटीं समवायमाना।
स्वाधारतोऽत्यन्तपृथक्तयैकः प्राजल्पि वैशेषिकदर्शने यः॥ ६८८॥

१५ एवं च वैशेषिकतन्त्रसिद्धा प्रमाणगम्यास्ति न षट्पदार्थी।
स्याद्वाद एवास्तु तत कृतीन्द्राः प्रमाणवीथीमवगाहमानः॥ ६८९॥

नैयायिकोक्तषोडशपदार्थपरीक्षणम्।

नैयायिकोपकल्पितषोडशतत्त्वव्यवस्थितौ।
सत्यां मानानामधिगम्यः कथमास्तां नन्वनेकान्तः॥ ६९०॥

२० तथा हि—प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां षोडशपदार्थानां क्रमेण लक्षणमिदम्— '**अर्थपरिच्छित्तिसाधनं प्रमाणम्**' तच्चतुर्विधम्— '**प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि**' इत्यभिधानात्।

---

१ न्या. मं. पृ. ७ पं. २५। २ गौ. सू. १।१।३।

'तत्परिच्छेद्यमात्मादि' द्वादशविधं प्रमेयम् । तथा च सूत्रम्—'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्' इति । 'तत्रात्मा सर्वस्य सुखदुःखसाधनस्य द्रष्टा । सर्वस्याश्च सुखादिसंवित्तेराश्रयत्वेन भोक्ता । तस्य भोगायतनं शरीरं भोगसाधनानीन्द्रियाणि भोक्तव्या इन्द्रियार्थाः' । 'बुद्धिरुपलब्धि- ५ र्ज्ञानमित्यनर्थान्तरम् ।' सर्वथोपलब्धौ नेन्द्रियाणि प्रभवन्तीति सर्वविषयं मनः । वाङ्मनःकायव्यापारः शुभाशुभफलप्रवृत्तिरित्युच्यते, पुरुषस्य कर्मसु प्रवर्तयितारो रागद्वेषमोहा दोषाः । देहेन्द्रियादिसंघातस्य संघातान्तरग्रहणं प्रेत्यभावः । प्रवृत्तिदोषजनितः सुखदुःखोपभोगः फलम् । 'बाधनालक्षणं दुःखम्' तस्य च यत्नेन परिहार्यत्वा- १० त्फलात्पृथगुपादानं शरीरादिनैकविंशतिभेदभिन्नेन दुःखेनात्यन्तिको वियोगोऽपवर्गः । एकविंशतिभेदास्तु शरीरं षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः सुखदुःखे इति । शरीरं दुःखायतनत्वाद्दुःखम् । इन्द्रियाणि विषया बुद्धयश्च तत्साधकभावात् । सुखं दुःखानुषंगाद्दुःखं स्वरूपत इति । 'नानार्थविमर्शः संशयः' । 'समानानेकधर्मोपपत्ते- १५ र्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः' इति सूत्रकारवचनात् । स च वार्तिककारमते त्रेधा । तथा हि—समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः । समानधर्मस्य स्थाणुपुरुषयोरूर्ध्वतालक्षणस्योपपत्ते- रुपलब्धेः । स च समानो धर्म उपलभ्यमानो न केवलः संशयहेतुः २० किं तूपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषांशे साधकबाधकप्रमाणा- भावाद्विशेषापेक्षः स्थाणुर्वा पुरुषो वेति विमर्शः संशयः । तथा

---

१ न्या. मं पृ. ७ पं. २६। २ गौ. सू. १।१।९। ३ गौ.सू. वा.भा. १।१।९। ४ गौ. सू. १।१।१५। ५ गौ. सू. १।१।२१। ६ न्या. मं. पृ. ७ पं. २६। ७ गौ. सू. १।१।२३। ८ न्या. वा. पृ. ८७ पं. १९ ( वार्तिकेऽक्षरभेदोऽधुनोपलभ्यते )

समानजातीयमसमानजातीयं वानेकमनेकस्मात् व्यावृत्तो धर्मोऽनेकधर्मस्तदुपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षः संशयः । यथाशब्देन विभागजत्वदर्शनात् । किमयं गुणो द्रव्यं कर्मेति विभागजत्वं सजातीये क्वचिद्गुणे विजातीये वा द्रव्ये कर्मणि च
५ न वर्तते । अतः संशयहेतुः । किं भूतस्यास्य विभागजत्वमिति । तथा विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षः संशयः । यथा, अस्त्यात्मेत्येके । नास्त्यात्मेत्यपरे । न च सद्भावासद्भावौ सममेकत्र भवतः । तस्मात्तत्त्वानवधारणमस्त्यात्मा नास्त्यात्मेति वा संशयः । भाष्यकारमते तूपलब्ध्यनुपलब्धी पृथक्संशयकारणमिति पञ्चधा
१० संशयः । तथा हि—उपलब्ध्यनुपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षः संशयः । यथोदकं सदुपलभ्यते तडागादिषु मरीचिषु चाविद्यमानम् । इदानीं क्वचिदुदकोपलब्धौ तत्त्वव्यवस्थापकप्रमाणस्यानुपलब्धेः सद्वोदकमसद्वेति संदेहः । तथानुपलब्ध्यनुपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षः संशयो यथा सन्मूलकी-
१५ लकादि नोपलभ्यते । सच्चानुपपन्नं विरुद्धं वा । इदानीं पिशाचोऽपि सन्नोपलभ्यते । सत्त्वेति संशयः समानोऽनेकश्च धर्मो ज्ञेयस्थः । विप्रतिपत्त्युपलब्ध्यनुपलब्धयस्तु ज्ञातृस्था इति भेदः । हिताहितप्राप्तिपरिहारौ तत्साधनं च प्रयोजम् । '[2]यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम्' तच्च द्विविधम् । मुख्यं सुखदुःखप्राप्तिपरिहारौ तत्साधनं
२० गौणम् । प्रतिबन्धावरणस्थानं दृष्टान्तः । तथा च सूत्रम्—'[3]लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः' नैसर्गिकं वैनयिकं चातिशयमाप्ता लौकिकाः । तद्विपरीताः

---

१ गौ. सू. वा. भा. पृ. ४२ पं. ५ । २ गौ. सू. १।१।२४ । ३ गौ. सू. १।१।२५ ।

परीक्षकाः । तेषां साध्यसाधनाधिकरणत्वेन तद्रहितत्वेन वा बुद्धिसाम्यविषयोऽर्थो दृष्टान्तः । '[1]**प्रमाणतोऽभ्युपगम्यमानः सामान्यविशेषवानर्थः सिद्धान्तः**'। '[2]**तन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात्**'। तत्र '[3]**सर्वतन्त्राविरुद्धः स्वतन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः**' । सर्वेषां संप्रतिपत्तिविषय इत्यर्थः । यथा प्रमाणानि प्रमेयसाधनानि घ्राणादीन्द्रियाणि गन्धादयस्तदर्था इत्यादि । '[4]**समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः**' यथा भौतिकानीन्द्रियाणि **यौगानाम्** । अभौतिकानीन्द्रियाणि **सांख्यानाम्** । '[5]**यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः**' । यस्मिन्नर्थे सिध्यति तदनुयायीन्यर्थान्तराण्यपि सिध्यन्ति सोऽधिकरणसिद्धान्तः । यथेन्द्रियव्यतिरिक्त आत्मा दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्येकस्मिन्नर्थे सिध्यति गुणव्यतिरिक्तो गुणी नियतविषयाणीन्द्रियाणीत्यादीन्यर्थान्तराण्यपि सिध्यन्ति । '[6]**अपरीक्षिताभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः**' । तद्विशेषपरीक्षणमिति । तस्यापरीक्षितस्यैव वस्तुनाऽभ्युपगतस्य ये विशेषास्तेषां परीक्षणम् । अपरीक्षितोऽपि हि कश्चिदर्थो बुद्ध्यतिशयचिख्यापयिषया प्रौढवादिभिस्तथेत्यभ्युपगम्यमानोऽभ्युपगमसिद्धान्तः । यथास्तु द्रव्यं शब्दस्तथाप्यनित्य इति परार्थानुमानवाक्यैकदेशभूता अवयवाः । तथा च सूत्रम्–'[7]**प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः**' इति । तत्र '[8]**साध्यधर्मविशिष्टस्य धर्मिणो निर्देशः प्रतिज्ञा**' । यथाऽनित्यः शब्द इति । लिङ्गवचनं हेतुः । यथा कृतकत्वादिति । दृष्टान्तवचनमुदाहरणम् । दृष्टान्तो द्विविधः । साधर्म्येण वैधर्म्येण च । यत्र प्रयोज्यप्रयोजकभावेन साध्यसाधनधर्मयोरस्तित्वं ख्याप्यते स साधर्म्यदृष्टान्तः । तस्य व्याप्यव्यापकभावगर्भं वचनमुदाहरणम् । यद्-

---

१ गौ. सू. १।१।२६ पाठभेदो दृश्यते । २ गौ. सू. १।१।२७ । ३ गौ. सू. १।१।२८ । ४ गौ. सू. १।१।२९ । ५ गौ. सू. १।१।३० । ६ गौ. सू. १।१।३१ । ७ गौ. सू. १।१।३२ । ८ गौ. सू. १।१।३३ पाठान्तरम् ।

त्कृतकं तत्तदनित्यं दृष्टम् । यथा घट इति । यत्र साध्याभावः ख्याप्यते स वैधर्म्यदृष्टान्तः । तस्य व्याप्यव्यापकभावगर्भं तथाभूतमेव वचनमुदाहरणम् । यत्रानित्यत्वं नास्ति तत्र कृतकत्वमपि नास्ति यथाकाश इति साधर्म्यवैधर्म्योदाहरणानुसारेण तथेति न तथेति वा
५ साध्यधर्मिणि हेतोरुपसंहार उपनयः । यत्कृतकत्वं तदनित्यं दृष्टं यथा घट इति साधर्म्योदाहरणे । तथा च कृतकः शब्द इत्युपनयः । यदनित्यं न भवति तत्कृतकमपि न भवति यथाकाशमिति वैधर्म्योदाहरणेन च । तथा कृतकः शब्द इत्युपनयः । हेत्वपदेशेन पुनः साध्यधर्मोपसंहरणं निगमनम् । तस्मात्कृतकत्वादनित्यः शब्द
१० इति । अविज्ञाततत्त्वे धर्मिण्येकतरपक्षानुकूलार्थदर्शनेन तस्मिन्सम्भावनाप्रत्यय ऊहस्तर्कः । यथा चाह केलिप्रदेशादावूर्ध्वत्वदर्शनात्पुरुषेणानेन भवितव्यमिति सम्भावनाप्रत्ययः ।

न चायं संशयोऽश्ववाहनप्रदेशे पुरुषवत्स्थाणोरसंभाव्यत्वेन समकक्षतया स्थाणुपुरुषयोरनुल्लेखात् । न च पुरुषनिर्णयोऽयं
१५ रात्रावपि स्थाणुखननसम्भावनया । तत्पक्षस्य सर्वात्मनानपनोदात् । पुरुषनिश्चयहेतूनां च शिरःपाण्यादिविशेषाणामप्रतिभासात्पक्षप्रतिपक्षविषयसाधनोपलम्भपरीक्षया तदन्यतरपक्षावधारणं निर्णयः । **'वीतरागकथा वस्तुनिर्णयफला'**[1] । **'वादो विजिगीषुकथा । पुरुषशक्तिपरीक्षणफला जल्पः'**[2] । जल्पविशेषो वितण्डा । अहेतवो हेतुवदा-
२० भासमाना हेत्वाभासाः । हेतोः पञ्च लक्षणानि पक्षधर्मत्वादीनि । तेषामेकैकापाये पञ्च हेत्वाभासा भवन्त्यसिद्धविरुद्धानैकान्तिककालात्ययापदिष्टप्रकरणसमाः । तत्र पक्षधर्मत्वं यस्य नास्ति सोऽसिद्धः । यथाऽनित्यः शब्दश्चाक्षुषत्वादिति । सपक्षे सत्त्वं यस्य नास्ति विपक्षे चास्ति स साध्यविपर्ययसाधनाद्विरुद्धः । यथाश्वोऽयं विषाणित्वा-
२५ दिति । विपक्षादपरिच्युतः पक्षसपक्षयोर्वर्तमानो हेतुः सव्यभिचारित्वा-

१ न्या. मं. पृ. ८ पं. ३। २ न्या. मं. पृ. ८ पं. ३।

दनैकान्तिकः । यथा नित्यः शब्दः प्रमेयत्वादिति । प्रत्यक्षागमविरुद्धः कालात्ययापदिष्टः, अबाधितपक्षपरिग्रहो हेतुप्रयोगकालमतीत्यासावपदिष्ट इति । अनुष्णोऽग्निः कृतकत्वाद्घटवदिति प्रत्यक्षविरुद्धपक्षानन्तरप्रयुक्तत्वेन, ब्राह्मणेन सुरा पेया द्रवत्वाज्जलवदित्यागमविरुद्धपक्षान्तरप्रयुक्तत्वेन च कालात्ययापदिष्टः । विशेषाग्रहणात्मकरणे पक्षे संशयो भवति । नित्यः शब्दोऽनित्यो वेति । तदेव विशेषाग्रहणं भ्रान्त्या हेतुत्वेन प्रयुज्यमानं प्रकरणसमो हेत्वाभासो भवति । अनित्यः शब्दोऽनित्यधर्मानुपलब्धेर्घटवत् । नित्यः शब्दोऽनित्यधर्मानुपलब्धेराकाशवदिति । 'अर्थविकल्पोपपादनेन वचनविघातश्छलम्' । यथा नवकम्बलो देवदत्त इत्यादौ । नवः कम्बलोऽस्येति हि नूतनविवक्षया कथिते परः संख्यामारोप्य निषेधति । कुतोऽस्य नव कम्बला इति । वाद्यभिप्रेतवस्तुप्रतिषेधार्थसमर्थो जायमानो हेतुप्रतिबिम्बनप्रायः प्रसंगो जातिः । यथा हेत्वादिसंमतवाक्यार्थप्रतिषेधाय जायतेऽसमर्थः प्रसंगोऽयं स जातिरिति कथ्यत इति । 'सत्यवस्त्वप्रतिभासो विपरीतप्रतिभासश्च निग्रहस्थानम्' । तत्कालानुचिता क्रियेत्यर्थः । यदुक्तम्— 'निग्रहस्थानमित्याहुस्तत्कालानुचितां क्रियाम्' इति । अत्र समाधीयते । यदुक्तम्– प्रमाणेत्यादि तदविचारितमनोहरम् । भवत्परिकल्पितानां प्रमाणादिषोडशपदार्थानां स्वरूपतः प्रमाणेन विचार्यमाणानामघटमानत्वात् । तथा हि– यस्तावद्भवद्भिः सकलपदार्थानां गरिष्ठत्वात्प्रथमतः प्रमाणपदार्थः प्रतिपादितः स यथा स्वरूपतः प्रमाणेन विचार्यमाणो नोपपद्यते तथा प्रत्यक्षादिप्रमाणस्वरूपनिरूपणावसरे प्रबन्धेन प्रसाधितम् । अतो भवत्परिकल्पितप्रमाणपदार्थस्याव्यवस्थितेः कथं तत्परिच्छेद्यत्वेनात्मादिप्रमेयतत्त्वमपि व्यवतिष्ठेत । यथा चात्मा नित्यव्यापित्वादिस्वभावो भवदभिमतो न युज्यते तथा षट्पदार्थपरीक्षावसरे प्रपञ्चितम् । शरीरं

१ न्या. मं. पृ. ८ पं. ५। २ न्या. मं. पृ. ८ पं. ६।

स्वावयवेभ्यः सर्वथार्थान्तरभूतमवयविनिरासादेव निरस्तम् । भौतिकानि प्राप्यकारीणीन्द्रियाणि रूपादयस्तदर्था बुद्धयन्तरवेद्या बुद्धिरणुपरिमाणं मनश्चेति चतुष्टयमपि पुरैव पराकृतम् । भवदभिमतवाङ्मनःकायानामव्यवस्थितेस्तद्व्यापाररूपा प्रवृत्तिरप्यव्यवस्थितैव । कूटस्थ-
५ नित्यस्य व्यापकस्य निष्क्रियस्य चात्मनः कर्मसु प्रवर्तयितारो दोषा अपि रागादयो न घटन्ते । परिणामिन्येवात्मनि तेषामुपपत्तेः । एतेन नित्यादिस्वरूपस्यात्मनः प्रेत्यभावोऽपि परास्तः । प्रवृत्तिदोषदूषणात्तज्जन्यं सुखदुःखोपभोगलक्षणं फलमपि दूषितम् । अनेन बाधनास्वरूपं दुःखमपि प्रत्याख्यातम् । अपवर्गश्च भवत्कल्पितो मोक्षस्वरूप-
१० निरूपणप्रबन्धके विघटयिष्यते । तन्न द्वादशविधं प्रमेयमवतिष्ठते । अपि चास्य द्वादशविधत्वावधारणं तावत्येव प्रमाणव्यापारपरिसमाप्तेः प्रयोजनपरिसमाप्तेर्वा स्यात् । आद्यः पक्षोऽनुपपन्नः । कालाकाशादिप्रपञ्चेऽपि प्रमाणव्यापारप्रतीतेः । न च तत्प्रपञ्चस्यैवात्रान्तर्भाव इत्यभिधातव्यम् । ततोऽस्यात्यन्तविलक्षणत्वात् । तथाविधानामप्येषामत्रा-
१५ न्तर्भावे आत्मन्येवाशेषार्थानामन्तर्भावात् । ब्रह्माद्वैतप्रसंगतो गता षोडशपदार्थकल्पना । द्वितीयपक्षेऽपि प्रयोजनस्यापवर्गलक्षणस्य नैतेष्वेव परिसमाप्तिः । तत्प्रसाधकानां दीक्षातपोध्यानादीनामत्र संग्रहाभावात् ।

तथा चानुपपन्नमिदमगादि **जयन्तेन** —

२० **'इत्येष षोडशपदार्थनिबन्धनेन**
**निःश्रेयसस्य मुनिना निरदेशि पन्थाः ।**
**अन्यस्तु सन्नपि पदार्थगणोऽपवर्ग-**
**मार्गोपयोगविरहादिह नोपदिष्टः ॥'** इति ।

पदार्थसंख्यायां संशयपरिगणने च विपर्ययानध्यवसाययोरपि
२५ परिगणनप्रसंगः । न्यायप्रवृत्त्यङ्गत्वमप्यनयोः संशयवदनिवार्यम् । विपरीतानध्यवसितयोरपि प्रतिपाद्यत्वात् । ततो नैतदपि तस्यैव

परिगणने कारणम् । न्यायप्रवृत्त्यङ्गत्वात्तस्य । परिगणने चानुग्रहेच्छा-परिभवाभिलाषलाभपूजाख्यात्यादेरपि परिगणनप्रसंगः । तत्प्रवृ-त्त्यङ्गत्वाविशेषात्प्रयोजनस्यापि लौकिकस्य तावत्कृष्यादिप्राप्ति-लक्षणस्य मुमुक्षुशास्त्रे पदार्थत्वेन भणनमननुगुणम् । तज्ज्ञानस्य निःश्रेयसाधिगमव्यभिचारोपलम्भात् । लोकोत्तरस्यापि तस्य ५ निःश्रेयसाधिगमलक्षणस्य पदार्थत्वेन कथनं न तथ्यम् । भवदभ्युपगतनिःश्रेयसस्य निराकरिष्यमाणत्वेन तज्ज्ञानतदधिगमयोर-नुपपत्तेः । दृष्टान्तस्याप्यनुमानान्तर्गतत्वेन पृथक्परिसंख्यानमनुपपन्नम्। अन्यथा लिङ्गादेरपि तत्प्रसंगः । सिद्धान्तस्तु प्रतिज्ञातो नार्थान्तरम् । अतोऽस्य पृथग्लक्षणाभिधानमनर्थकम् । सर्वैरेव हि शास्त्रकारैरपसि- १० द्धान्तं ब्रुवाणो निगृह्यते । न च सिद्धान्तलक्षणप्रतिज्ञातः पृथक्कैः क्रियते । तस्या एव सिद्धान्तत्वेन सर्वेषां सुप्रसिद्धत्वात् । अवयवानां च पदार्थसंख्यायां परिगणनेऽनुमानस्यापि पृथक्परिगणनप्रसंगः । तस्य प्रमाणान्तर्गतत्वात् । पृथगपरिगणनेऽवयवानामनुमानात्मकत्वान्न पृथक्परिगणनं स्यात् । प्रधानभूतं चानुमानं प्रमाणान्तर्गतत्वान्न पृथ- १५ गुपादीयते । तदन्तर्भूतास्त्ववयवाः पृथगुपादीयन्त इति महती प्रेक्षा-पूर्वकारिता । उपादानेऽप्येषामियत्तावधारणमयुक्तम् । यावद्भिर्विव-क्षितार्थप्रतिपत्तिर्भवति तावतामेवोपादानार्हत्वात् । सा च कचित्क्रिय-द्भिर्भवतीत्युदयनोऽपि पञ्चमाध्याये **तात्पर्यपरिशुद्धौ** — ' **स्यादेतदेवं तर्हि दूषणस्यापि पञ्चावयवप्रयोगप्रतिपाद्यता प्राप्नोति परार्थानु-** २० **मानात्** ' इत्याशङ्क्याह— ' **अतः परिषत्प्रतिवाद्यनपेक्षितत्वा-त्पञ्चावयवप्रयोगानभिधानमिति** ' इति । तर्कस्य च प्रमाणविषय-परिशोधकत्वमुच्यते भवद्भिः । तच्च प्रमाणविषयतिरोधायकापनेतृत्वं संशयादिव्यवच्छेदेन तन्निश्चायकत्वं तद्ग्रहणे प्रवृत्तस्य प्रमाणस्याग्रे-सरतया तत्स्वरूपविवेचनमात्रं वा । प्रथमपक्षे प्रतीतिविरोधः । घटा- २५ दितिरोधायकस्यान्धकारादेस्तर्कादपनयनाप्रतीतेः । द्वितीयतृतीयपक्ष-

योरप्रमाणात्मकोऽसौ तथा तन्निश्चयं तद्विवेचनमात्रं च कुर्यात्प्रमाणात्मको वा । न तावदप्रमाणात्मकः । प्रमाणविषयस्याप्रमाणात्मना तेन परिशोधनानुपपत्तेः । यदप्रमाणं न तत्प्रमाणविषयपरिशोधकम् । यथा मिथ्याज्ञानम् । प्रमेयो वार्थोऽप्रमाणं च भवद्भिः परिकल्पितस्तर्क
५ इति । तत्परिशोधकत्वे चास्य प्रमाणत्वप्रसंगः । यत्प्रमाणविषयपरिशोधकं तत्प्रमाणं यथानुमानादि । प्रमाणविषयपरिशोधकश्च भवद्भिः परिकल्पितस्तर्क इति । अस्तु तर्हि प्रमाणात्मक एवासाविति चेत् । न । चत्वार्येव प्रमाणानीति प्रमाणसंख्याव्याघातप्रसक्तेः । निर्णयश्च प्रमाणस्य फलम् । तस्य च तस्मादेकान्तेन भिन्नस्य भवदभ्युपेतस्य
१० फलपरिच्छेदे प्रतिषेध्यमानत्वान्नात्र पदार्थतया निर्देशः कर्तुं युक्त इति । वादजल्पवितण्डानां तु स्वरूपं वादलक्षणैककथाव्यवस्थापनावसरे निराकरिष्यते । हेत्वाभासानामपि पृथक्पदार्थतया परिगणनं निष्प्रयोजनम् । अन्यथा प्रत्यक्षाद्याभासानामपि तथा परिगणनप्रसंगात्षोडशपदार्थसंख्याक्षतिप्रसंगः । प्रत्यक्षादिप्रमाणनिर्देशसामर्थ्यादेव तदाभासानां
१५ लब्धत्वादपरिगणने पञ्चलक्षणकहेतुनिर्देशसामर्थ्यादेव हेत्वाभासानामपि लब्धत्वादपरिगणनमस्त्वाविशेषात् । छलं तु बालक्रीडाप्रायं न प्रामाणिकानां निःश्रेयसार्थिनामवलम्बितुमुचितमिति । जातिस्तु दूषणाभासस्वभावा हेत्वाभासैरेव संगृहीतेति किमित्येभ्यः पृथक्कथ्यते । निग्रहस्थानं पुनरनन्तत्वान्नेयत्तयावधारयितुं शक्यमिति न तल्लक्षणमपि
२० सोपयोगमिति । विस्तरस्तु छलजातिनिग्रहस्थानानां प्रत्येकदूषणं वादलक्षणैककथावस्थापनसमये प्रकाशयिष्यते ।

अभ्येत्यतः षोडशतत्त्वमार्गोऽप्ययं प्रमाणस्य न गोचरत्वम् ।
सांख्योक्ततत्त्वान्यपि नैव तर्क....णः परिभावयन्तु ॥ ६९१ ॥

तथा हि— एवममी प्रधानादीनि पञ्चविंशतितत्त्वानि व्यावर्ण-
२५ यन्ति । प्रदधाति धारयति महदादीन्विकारानिति प्रधानम् । तच्च संक्षेपतस्त्रिविधं

सांख्यतत्त्वपरीक्षणम् ।

कार्यं करणं शक्तिरिति । त्रेधा हि जगत्, स्थितं कार्यं तन्मात्रादिकरणं खादिशक्तिर्गुणत्रयमित्यभिधानात् । न हि कार्यकरणशक्तेर्व्यतिरिक्तो जगत्प्रपञ्चोऽस्ति । तत्र कार्यं दशविधम् । तन्मात्रमहाभूतसंज्ञकं करणं त्रयोदशविधं बुद्धीन्द्रियकर्मेन्द्रियान्तःकरणबुद्ध्यहंकारभेदात् । शक्ति-श्चाननुभूयमानस्वभावा प्रकृतिरेकैव । मूलोपादानभूततत्सद्भावावेदकं तु— ५

**' भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च ।**
**कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥'** इति ।

हेतुपञ्चकं परिमितत्वं ह्येककारणपूर्वकस्यैव प्रतिपन्नम् । यथा घटघटीशरावोदञ्चनादेरेकमृद्द्रव्यपूर्वकस्य । परिमितं चेदं व्यक्तमेका बुद्धिरेकोऽहंकारः पञ्च तन्मात्राणि, एकादशेन्द्रियाणि पञ्चभूतानि । १० अत एतेषां भेदानां परिमितस्वभावानां यत्तदेकं कारणं तदप्रधानमेवेति तदस्तित्वसिद्धिः । समन्वयाच्च यद्यज्जातिसमन्वितं हि यत्तत्तदात्मक-कारणकार्यं यथा घटादयो विशेषा मृज्जातिसमन्विता मृदात्मक-कारणकार्याः सत्त्वरजस्तमोजातिसमन्वितं चेदं महदादि व्यक्तं तत-स्तदात्मकप्रधानपूर्वकमिति सत्त्वस्य हि प्रसादलाघवाद्धर्षप्रीत्यादिकं १५ कार्यं, रजसस्तापशोषोपष्टम्भोद्वेगादिकं, तमसो विषाददैन्यबीभत्सगौ-रवावरणादिकम् । तदुक्तम्— **' सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं रजः । गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥'** इति । अस्य व्याख्या—**'सत्त्वमेव लघु प्रकाशकमिष्टं सांख्याचार्यैः । तत्र कार्यस्यो-द्गमनहेतुर्धर्मो लाघवं गौरवप्रतिद्वन्द्वि । यतोऽग्नेरूर्ध्वज्वलनं भवति ।** २० **तदेव लाघवं कस्यचित्तिर्यक्पवनहेतु यथा वायोः । एवं करणानां वृत्तिपटुत्वहेतुर्लाघवं गुरुत्वे हि मन्दानि स्युः । प्रकाशकत्वं तु सत्त्वस्य स्पष्टप्रतिप्रसिहेतुत्वमुच्यते, सत्त्वतमसी स्वयमक्रियत्वा-त्स्वकार्यप्रवृत्तिं प्रत्यवसीदती रजसोपष्टभ्येते । अवसादात्प्रच्याव्य स्वकार्ये उत्साहं प्रयत्नं कार्येते तदिदमुक्तम् 'उपष्टम्भकम्' इति ।** २५

---

१ सां. का. १५ । २ सां. का. १३ । ३ सां. त. कौ. १३ ।

कस्मादित्यत उक्तम् 'चलम्' इति । तदनेन रजसः प्रवृत्त्यर्थत्वं दर्शितम् । इतश्चाव्यक्तमस्तीत्याह –'शक्तितः प्रवृत्तेश्च' इति । कारणशक्तितः कार्यं प्रवर्तत इति सिद्धम् । अशक्तात्कारणात्कार्यस्यानुपपत्तेः शक्तिश्च कारणगता न कार्यस्याव्यक्तत्वादन्या । न हि
५ सत्कार्यपक्षे कार्यस्याऽव्यक्तताया अन्यस्यां शक्तावस्ति प्रमाणम् । अयमेव हि सिकताभ्यस्तिलानां तैलोपादानानां भेदो यदेतेष्वेव तैलमस्त्यनागतावस्थं न सिकतासु' इति । कारणकार्यविभागाच्च कारणकार्ययोर्विभाग इदं कारणमिदं कार्यमिति बुद्ध्या द्विधावस्थापनं सोऽवस्थितैकभावपूर्वको दृष्टः । यथा स्थासकोशादि-
१० कारणकार्यविभागोऽवस्थितैकमृत्पूर्वकः । अस्ति चायं महदादिषु तस्मादवस्थितैकभावपूर्वकः । यश्चावस्थित एको भावस्तदव्यक्तम् । तथा– अविभागाद्वैश्वरूप्यस्य । विश्वरूपमेव वैश्वरूप्यमिति स्वार्थिकः ष्यञ् । इह यद्विश्वरूपं नानाप्रकारं तस्याविभागो दृष्टः । तद्यथा मृदपेक्षया घटघटीशरावोदञ्चनादीनां विश्वरूपाश्च महदादयस्ततस्तेषामप्यविभागेन
१५ भवितव्यम् । योऽसावविभागस्तदव्यक्तम् । एवं प्रमाणतः प्रसिद्धसत्ताका प्रकृतिरनेन क्रमेण तत्त्वसृष्टौ प्रवर्तते ।

'प्रकृतेर्महांस्ततोऽहंकारस्तस्माद्गणश्च षोडशकः ।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥'[1] इति ।

प्रथमं हि प्रकृतेर्महानेको व्यापको विषयाध्यवसायरूप आसर्ग-
२० प्रलयस्थायी बुद्ध्यपराधीनः प्रभवति । स चास्मादृशामसंवेद्यस्वभावः । ततस्तु याः प्रतिप्राणिविभिन्ना बुद्धिवृत्तयो निःसरन्ति ताः संवेद्यस्वभावाः । ततश्चाहंकारस्तथाविधो जलनिधेरिव प्रतिप्राणिविभिन्नैस्तैस्तैः स्थूलोऽहं सुरूपोऽहमित्याद्यहंकारतरङ्गविशेषैः प्रसरति । स चाहङ्कारो वैकृतो भूतादिश्चेति प्रथमतो द्विप्रकारः प्रसरति । तत्र वैकृता-
२५ त्सत्त्वप्रधानादहंकारात्प्रकाशरूप एकादशविध इन्द्रियगणोऽयं प्रादुर्भ-

1 सां. का. २२।

वति । पञ्च श्रोत्रत्वक्चक्षुर्जिव्हाघ्राणलक्षणानि बुद्धये बुद्धिमभिव्यक्तुमिन्द्रियाणि वाक्पाणिपादपायूपस्थसंज्ञानि कर्मणे कर्माभिव्यक्तये । इन्द्रियाणीति मनः संकल्परूपं ग्रामेऽहं प्रस्थितः सुवर्णस्य प्राप्तिर्भविष्यति द्रव्यस्य चेत्यादिसंकल्पवृत्तिभूतादेस्तु तमःप्रधानादहङ्कारात्पञ्च तन्मात्राणि प्रादुर्भवन्ति । '**तेभ्यः षोडशकगणादपकृष्टेभ्यः सूक्ष्मशब्दस्पर्शरूपरसगन्धस्वमात्रेभ्यः पञ्च भूतान्याकाशादीन्याविर्भवन्ति । तत्र शब्दतन्मात्रादाकाशं शब्दगुणं, शब्दतन्मात्रसहितात्स्पर्शतन्मात्राद्वायुः शब्दस्पर्शगुणः, शब्दस्पर्शतन्मात्रसहिताद्रूपतन्मात्रात्तेजः शब्दस्पर्शरूपतन्मात्रसहिताद्रसतन्मात्रादापः शब्दस्पर्शरूपरसगुणाः, शब्दस्पर्शरूपरसतन्मात्रसहिताद्गन्धतन्मात्राच्छब्दस्पर्शरूपरसगन्धगुणा पृथिवी जायत इति** । मात्रग्रहणं च भूतत्वाभावज्ञापनार्थं शब्दतन्मात्रादिषु विज्ञेयम् । भूतस्वभावानि शब्दतन्मात्रादीनि न भवन्ति । भूतकारणानि तु भवन्तीति भावः । एतानि च योगिनामेव श्रोत्रादिभिरिन्द्रियैः परिच्छिद्यन्ते । सूक्ष्मस्वभावाक्रान्तत्वात् । अस्मदादीनां तु श्रवणादीन्द्रियैः स्थूला एव शब्दादयो विषयीकर्तुं शक्यन्त इति । अयं च महदादिप्रपञ्चः प्रकृतौ सन्नेवाविर्भावं प्रतिपद्यते ।

**'असदकरणादुपादानग्रहणात्सर्वसंभवाभावात् ।**
**शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम् ॥'**

इति वचनात् । अस्यार्थः—असदकरणादिति । असच्चेत्कारणव्यापारात्पूर्वं कार्यं घटादि तर्हि नास्य सत्त्वं शक्यं कर्तुम् । न हि नीलं शिल्पिसहस्रेणापि पीतं शक्यं कर्तुम् । सदसत्त्वे घटस्य धर्माविति । .... .... .... ....

.... .... .... .... .... ....

दभिन्नत्वाद्यत्पुनः सन्न भवति तत्कारणादभिन्नमपि न भवति ।

---

१ सां.त. कौ. पृ. १०० । २ सां. का. ९।

यथा करिकेसरनिकुरम्बमिति । न च कारणादभिन्नत्वं कार्यस्यासिद्धं तत्साधकानुमानसद्भावात् । तथा हि– न पटस्तन्तुभ्यो भिद्यते तद्धर्मत्वात् । यद्यतो भिद्यते तत्तस्य धर्मो न भवति । यथा गौरश्वस्य धर्मश्च पटस्तन्तूनां तस्मात्तेभ्यो न भिद्यते । यथा तन्तुपटौ
५ परस्परं न भिद्येते । उपादानोपादेयरूपत्वात् । यौ पुनर्भिद्येते न तावुपादानोपादेयरूपौ यथा घटपटौ । इतश्चानर्थान्तरत्वं तन्तुपटयोः संयोगप्राप्त्यभावात् । अर्थान्तरत्वे हि संयोगो दृष्टो यथा कुण्डबदरयोरप्राप्तिर्वा यथा हिमवद्विन्ध्ययोः । न चेह संयोगाप्राप्ती स्तः । तस्मान्नार्थान्तरत्वम्' इति । 'तदेवमभेदे सिद्धे तन्तव एव तेन
१० संस्थानभेदेन परिणताः पट इति स्वात्मक्रियानिरोधबुद्धिव्यपदेशार्थक्रियाभेदाश्च नैकान्तिकं भेदं साधयितुमर्हन्ति । एकस्मिन्नपि तत्तद्विशेषाविर्भावतिरोभावाभ्यामेषामविरोधात् । यथा कूर्मस्याङ्गानि कूर्मशरीरे निविशमानानि तिरोभवन्ति निःसरन्ति चाविर्भवन्ति । नतु कूर्मस्तदङ्गानि चोत्पद्यन्ते ध्वंसन्ते वा । एक-
१५ मेकस्या मृदः सुवर्णस्य वा कुटकटकादयो विशेषा निःसरन्ति, आविर्भवन्त उत्पद्यन्त इत्युच्यन्ते न पुनरसतामुत्पादः सतां वा निरोधः । यथाह व्यासः— 'नासतो विद्यते भावो नाभावो विद्यते सतः ॥' इति । तथा च कूर्मः स्वावयवेभ्यः संकोचविकासिभ्यो न भिन्नः । एवं कुटकटकादयो मृत्सुवर्णादिभ्यो न
२० भिन्नाः । एवं चेह तन्तुषु पट इति बुद्धिव्यपदेशश्च । यथेह वने तिलका इत्युपपन्नः । न चार्थक्रियाभेदो भेदमापादयत्येकस्यापि नानार्थक्रियस्य दर्शनात् । यथैक एव वन्हिर्दाहकश्च पावकश्चेति । तस्मात्प्रत्येकं तन्तवः प्रावरणमकुर्वाणा अपि मिलिता आविर्भूतपटभावाः प्रावरिष्यन्ति । न च भेत्स्यन्ते ।
२५ स्यादेतदाविर्भावः पटस्य कारणव्यापारात्प्राक्सन्नसन्वा । स

१ सां. त. कौ. पृ. ६४ पं. ८ । १ भ. गी. २।१६।

चेदसन्प्राप्तमसत उत्पाद इति । अथ सन्, कृतं तर्हि कारणैः । न हि सति कार्ये कारणानां प्रयोजनं पश्यामः । आविर्भावे वाविर्भावान्तरकल्पनेऽनवस्थाप्रसंगः । तस्मादाविर्भूतपटभावास्तन्तव इति रिक्तं वचः । अत्रोच्यते । असदुत्पद्यते इत्यत्रापि मते केयमसतामुत्पत्तिः सत्यसती वा । सती चेत्कृतं कारणैः । असती ५ चेत्तस्या अप्युत्पत्त्यन्तरमित्यनवस्था । अथोत्पत्तिः पटान्नार्थान्तरमपि तु पट एवासौ तथापि यावदुक्तं भवति पट इति तावदुक्तं भवत्युत्पद्यत इति । ततश्च पट इत्युक्ते उत्पद्यत इति । न च वाच्यं पौनरुक्त्याद्विनश्यतीत्यपि न वाच्यं विरोधात् । तस्मान्नामीभिर्गजविकल्पैस्तत्त्वमुपप्लावनीयम् । तथा च सत एव १० पटादेराविर्भावाय कारणापेक्षेत्युपपन्नम् । न च पटरूपेण कारणानां संबन्धस्तद्रूपस्याक्रियात्वात्, क्रियासंबन्धित्वाच्च कारकाणामन्यथा कारकत्वाभावात् ।' तदित्थं कार्यस्य कारणादभेदे प्रतिषिद्धे सन्नेवासौ महदादिप्रपञ्चः प्रकृतेः सकाशादाविर्भवतीति सिद्धम् । नन्वेवमभेदे व्यक्ताव्यक्तयोः कथं कार्यकारणभावव्यवस्थेति चेत् । उच्यते— १५ हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् । सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥' इति लक्षणभेदात् । तथा हि— 'व्यक्तं हेतुमत्, हेतुः कारणमस्यास्तीति कृत्वा' प्रधानेन हि हेतुमती बुद्धिः । बुद्ध्याहंकारोऽहंकारेण षोडशको गणः पञ्चभिस्तन्मात्रैः पञ्च महाभूतानि न त्वेकमव्यक्तं तत्कारणभावात्, चिद्रूपश्च पुरुषो न २० जडस्वरूपस्य कारणमत्यन्तविलक्षणत्वात् । तथा महदादि व्यक्तमनित्यं विनाशि तिरोभावीत्यर्थः । नन्वेवमव्यक्तं तस्या अहेतुमत्वेनानित्यत्वायोगात् । अव्यापि च व्यक्तं नियतदेशवर्तित्वात् । नन्वेवमव्यक्तं विभुत्वात् । तथा व्यक्तं सक्रियं परिस्पन्दवत् । तथा हि—

---

१ सां. का. १० । २ सां. त. कौ. पृ. ७० पं. २ । ३ सां. त. कौ. पृ. ७० पं. ३ ।

बुद्ध्यादय उपात्तमुपात्तं देहं त्यजन्ति देहान्तरं चोपाददत इति तेषां परिस्पन्दः । शरीरपृथिव्यादीनां च परिस्पन्दः प्रसिद्ध एव । न पुनरेवमव्यक्तं, यद्यपि चास्याप्यस्ति परिणामलक्षणा क्रिया तथापि परिस्पन्दो नास्ति । अनेकं च व्यक्तं महदादिसंचयरूपत्वात् । अव्यक्तं
५ पुनरेकमन्यथा बहूनां प्रधानानामीश्वराणामिव परस्परमतभेदेन कार्यारम्भे प्रवर्तमानानां काचव्यान्न( ? ) कार्यनिष्पादकत्वं स्यात् । आश्रितं च व्यक्तं यस्मादुत्पद्यते तस्य तदाश्रितत्वात् । नन्वेवमव्यक्तं '**अभेदेऽपि कथंचिद्भेदविवक्षाश्रयाश्रयिभावो यथेह वने तिलकाः**' इत्यत्र लिङ्गं च व्यक्तं लीनं सूक्ष्मं स्वकारणं गमयतीति लयं गच्छतीति वा ।
१० प्रलये हि महदादि यथास्वं कारणेषु लीयते न निरन्वयं नश्यति । न त्वेवं प्रधानं तद्धर्म्यकारणान्तरस्यासंभवात् । **सावयवं च व्यक्तमवयवनमवयवो मिश्रणं संयोग इति यावत् । अप्राप्तिपूर्विका प्राप्तिश्च संयोगस्तेन सह वर्तत इति सावयवम् । तथा हि— पृथिव्यादयः परस्परं संयुज्यन्ते । एवमन्येऽपि । न तु प्रधानस्य**
१५ **बुद्ध्यादिभिः संयोगस्तादात्म्यात् । नापि सत्त्वरजस्तमसां परस्परं संयोगोऽप्राप्तेरभावात् । परतन्त्रं च व्यक्तं बुद्ध्या हि स्वकार्येऽहंकारे जनयितव्ये प्रकृत्या पूरोऽपेक्ष्यते । अन्यथा क्षीणा सती नालमहंकारं जनयितुमिति स्थितिः । एवमहंकारादिभिरपि स्वकार्यजनन इति सर्वं स्वकार्यजनने प्रकृत्यापूरमपेक्षते । तेन**
२० **प्रकृतिं परामपेक्षमाणं कार्योपक्रमणे परतन्त्रं व्यक्तम् ।**' नन्वेवमव्यक्तं कारणान्तरासंभवेन । तस्य स्वतन्त्रत्वात् । न चैवमनयोरात्यन्तिको भेद एव । '**त्रिगुणमविवेकिविषयः सामान्यमचेतनं प्रसवधर्मि । व्यक्तं तथा प्रधानं तद्विपरीतं तथा च पुमान्** ' ॥ इति लक्षणाभेदात्तयोरभेदस्याप्युपपत्तेः । तथा हि— त्रिगुणमिति त्रयो

---

१ सां. त. कौ. पृ. ७१ पं. २। २ सां. त. कौ. पृ. ७१ पं. ७। ३ सां. का. ११। ४ सां. त. कौ. पृ. ७२ पं. १४।

गुणाः सुखदुःखमोहा अस्येति त्रिगुणं व्यक्तं प्रधानं च। तदनेन सुखादीनामात्मगुणत्वं पराभिमतं पराकृतम्। अविवेकि यथा प्रधानं स्वतो न विविच्यते। एवं महदादयो (?) प्रधानाद्वि-विच्यन्ते तदात्मकत्वात्। ये प्राहुर्विज्ञानमेव हर्षविषादशब्दाद्याकारं न पुनरितोऽन्यस्तद्धर्मेति तान्प्रतीदमुक्तं विषय इति। व्यक्तं प्रधानं च विषयो विज्ञानाद्बहिरिति यावत्। अत एव सामान्यं साधारणं सर्वपुरुषोपभोग्यत्वाद्वेश्याकुटीवत्। विज्ञानाकारत्वे पुनरसाधारणत्वाद्विज्ञानानां वृत्तिरूपाणां घटादयोऽप्यसाधारणाः[1] स्युस्ततश्चैकतयानेकस्मिन्नर्तकीभ्रूलताभङ्गे बहूनां प्रतिसंधानमुपजायेत। अचेतनं सर्व एव बुद्ध्यादयोऽचेतना न तु बौद्धादीनामिव बुद्धेश्चैतन्यमित्यर्थः। प्रसवधर्मि प्रसवः कार्यजननं धर्मोऽस्यास्तीति। तथा हि प्रकृतिर्बुद्धिं जनयति, बुद्धिरप्यहंकारम्। अहंकारेऽपि तन्मात्राणीन्द्रियाणि चैकादश तन्मात्राणि तु महाभूतानि जनयन्ति। व्यक्तवत्तापदेशार्थं प्रधानस्योक्तम्। तथा प्रधानमिति व्यक्ताव्यक्ताभ्यां पुरुषस्य वैधर्म्याभिधानार्थमभिहितम्। तद्विपरीतः पुमानिति। स्यादेतत्। अहेतुमत्त्वनित्यत्वादि प्रधानसाधर्म्यमस्ति पुरुषस्य। एवमनेकत्वं व्यक्तसाधर्म्यमस्ति। तत्कथमुच्यते तद्विपरीतः पुमानित्यतः कथितम्—तथा चेति। चकारोऽप्यर्थः। यद्यप्यहेतुमत्त्वादि साधर्म्यमस्ति तथापि त्रैगुण्यादिकं पुरुषस्य वैपरीत्यं व्यक्ताव्यक्ताभ्यामित्यर्थः।

संख्यां तु सांख्यानामुचितं संख्याविदां मतं तस्मात्।
यत्रैकान्ताभिन्नं प्रधानमगमन्मितेर्मार्गम्॥ ६९२ ॥

---

[1] सां. त. कौमुद्यां तु 'विज्ञानं यथा परेण न गृह्यते परबुद्धेरप्रत्यक्षत्वादित्यभिप्रायः। तथा च नर्तकीभ्रूलताभङ्गे एकस्मिन् बहूनां प्रतिसंधानं युक्तम्' इति।

कपिकुलपरिपन्थि चापलं तदिदं यत्किल चक्रुरुद्धताः ।
कपिलस्य सुतास्ततः क्षणं कुर्मः शिक्षणमेषु युक्तितः ॥ ६९३ ॥

तथा हि— यत्तावदवादि ' तत्सद्भावावेदकं तु भेदानां परिणामात् ' इत्यादि हेतुपञ्चकं तदाश्रयासिद्धिदोषदुष्टत्वादयुक्तम् । प्रकृ-
५ तेरसंवेद्यस्वभावतया स्वरूपेणासिद्धत्वाद्व्यतिरेकेणासिद्धत्वाच्च । परिमिततत्त्वादिकं हि साधनं भेदेषु वर्तते । अस्तित्वं तु साध्यं प्रकृताविति । अथ महदादिभेदानामेवात्रैककारणपूर्वकत्वं प्रसाध्यते । तेनोक्तदोषद्वयाभावः । तदपि न सुन्दरम् । प्रधानपुरुषैर्व्यभिचारात् । तत्रैकत्वानेकत्वसंख्यया महापरिमाणेन च परिमितत्वेऽप्येककारण-
१० पूर्वकत्वासंभवात् । किं च परिमितं च स्यादेककारणपूर्वकं च न भवेत्, किं विरुध्येत । दृष्टान्तस्तु साध्यविकलः । कुम्भादेरेककारणपूर्वकत्वासंभवात् । न ह्येकं किंचिज्जनकं प्रतीयते सहकारीतरकारणप्रभवत्वात्कार्याणाम् । मृद्द्रव्यस्याप्यनेकावयवसमुदायात्मकत्वान्न सर्वथैकत्वम् । अतः परिमितत्वमनेककारणपूर्वकत्वेनैव व्याप्तत्वाद्विरुद्धम् ।
१५ समन्वयादित्यप्यनैकान्तिकम् । प्रकृतिपुरुषाणामेककारणपूर्वकत्वाभावेऽपि नित्यव्यापित्वादिधर्मैः समन्वयसंभवात् । पुरुषाणां च भोक्तृत्वादिधर्मैरिति । भिन्नजातीनां च जलानिलादीनामेकोपादानप्रभवत्वं दुरुपपादम् । पदार्थजातिभेदस्य कारणैकत्वविरोधित्वात् । असिद्धं चेदं साधनम् । न हि समग्रभूतग्रामस्य सुखदुःखमोहमयत्वेनान्वितत्वसिद्धिरस्ति । सुखादी-
२० नामन्तःसंविद्रूपतया प्रतिभासतो बाह्यार्थानां तन्मयत्वानुपपत्तेः । न हि कश्चिद्बाह्यं स्रक्चंदनादिकं सुखमिति प्रतिपद्यते । सुखजनकत्वेनाबालं तत्प्रसिद्धेः । न च कार्यकारणयोरेकत्वमनौपचारिकं प्रामाणिकैराद्रियते । एतेन ' सत्त्वं लघु प्रकाशकमिष्टम् ' इत्यादिकारिका सव्याख्याना प्रत्याख्याता । स्रक्चन्दनादीनां सुखदुःखमोहमयत्वाप्र-
२५ सिद्धौ सत्त्वरजस्तमोमयत्वस्याप्रसिद्धेः शक्तितः प्रवृत्तेरित्यस्यापि शक्तेः कार्याव्यक्ततारूपायाः सकाशात्कार्यप्रवर्तनादित्यर्थः । तत्र केयं

कार्याऽव्यक्तता नाम । कारणात्मन्यव्यक्तं कार्यमेवेति चेत् । ननु तद्व्यक्तकार्याद्व्यतिरिक्तमव्यतिरिक्तं वा । न तावद्व्यतिरिक्तम् । सत्कार्यवादव्याहतिप्रसक्तेः । नाप्यव्यतिरिक्तम् । तस्य व्यक्ताव्यक्तरूपतानुपपत्तेरेकत्वादित्यसिद्धैव शक्तितः प्रवृत्तिः .... ....

.... .... त्यमविद्यमानसाध्याश्च परमते कारकत्वेनाभि- ५
मताः पदार्था इति । न चाभिव्यक्तौ तेषां व्यापारः । तत्रापि सत्त्वासत्त्वपक्षयोः करणासंभवात् । न खलु सापि विद्यमाना कर्तुं युक्ता । करणानुपरमप्रसंगात् । अविद्यमानायाश्च तस्याः करणे सत्कार्यवादहानिः स्यादिति कारकत्वस्यासत्त्वात्कथं क्रियमाणं .... ....

.... .... त्वात्, क्रियमाणत्वादिति साधनं न कारण- १०
व्यापारात्प्राक्कार्यस्यैकान्तसत्त्वसिद्धये प्रभवति । नाप्युपादानसंबद्धत्वादिति प्रत्यक्षबाधादेरत्राप्यवतारात् । उपादानेन च कार्यस्य संबन्धस्तादात्म्यमेव च सांख्यैराख्यायेत तत्र च कार्यकारणयोस्तादात्म्यं सर्वथा वा स्यात्कथंचिद्वा । प्रथमकल्पनायामुपा ....

.... .... .... .... .... .... १५
सर्वथा तादात्म्यस्य कार्यकारणयोर्जैनैरनभ्युपगमात् । द्वितीयकल्पनायां तु बाधसिद्धः । न खल्वनेकान्तवादिभिरिव कापिलैः कार्यकारणयोः कथंचित्तादात्म्यं प्रतिज्ञायते । प्रतिज्ञाने वा सर्वथा सत्कार्यवादविरोधापत्तिर्येन हि रूपेण कार्यस्य कारणेन सह न .... ....

.... .... पन्नमेव । तथा विरुद्धोऽप्ययं हेतुर्भवति । प्रकृतसा- २०
ध्यविरुद्धेन कथंचित्सत्त्वेनैवान्यथानुपपन्नत्वात् । न च कारणव्यापारात्पूर्वं कार्यस्य कथंचिदसत्त्वस्वीकारे तदर्थिनां प्रतिनियतोपादानग्रहणं दुरुपपादमिति वाच्यम् । अन्वयव्यतिरेकसमधिगम्यो हि कार्यकारणभावः । यच्च यस्मादन्वय .... .... ....

*भिस्तदेवोपादीयते न सर्वम् । तथा च प्राक्कार्यसद्भावाङ्गीकारो व्यर्थः ।* २५
तदङ्गीकारे मूलत एवोपादानग्रहणाभावप्रसक्तेन हि विद्यमानवस्तु

सिद्ध्यर्थं कश्चिदुपादानं गृह्णाति .... .... ....
.... ग्रहणानुषङ्गात् । तन्नोपादानसंबद्धत्वादपि सत्कार्यवादसिद्धिः ।
नियतरूपेण नियतादुत्पन्नत्वादित्यपि साधनं वाद्यसिद्धम् । यत्खलु
स्वरूपेणाविद्यमानं तत्प्रतिनियतं कारणमासाद्य प्रतिनियतेनात्मना
५ समुत्पाद्यते .... .... कार्यं सर्वात्मना विद्यमानमेव तथाविधस्य
चोत्पत्तिप्रतिपादनमसंगतमपि प्रसंगात् । प्रकृतिपुरुषयोरपि सर्वात्मना
विद्यमानयोरुत्पादापत्तेरविशेषात् । तथा च हेतुमदनित्यमित्यादिना
त्रिगुणमविवेकिविषय .... .... .... .... ....
.... ....क्तद्वैपरीत्याभिधानमसंबद्धमेव स्यात् । किं च ' सर्वं
१० सर्वत्र विद्यते ' इति कापिलैः प्रतिज्ञायते ततो यथा तिलादिषु तिरो-
हितेनात्मना तैलादिकं समस्ति तथा तरङ्गिणीतीरवर्तिनीषु सिकता-
स्वपीति ताभ्योऽपि तैलादेराविर्भावः प्रतिरोद्धुं न पार्यते । तथा च
कथं नियतरूपेण नियतादुत्पन्नत्वादिति साधनं कपिलमतानुयायिनां
नासिद्धम् । विरुद्धं चेदं नियतरूपेण नियतादुत्पन्नत्वस्य साध्यत्वा-
१५ भिमतसर्वथासत्त्वविरुद्धेन कथंचित्सत्त्वेनैवाव्यभिचारित्वात् । पक्ष-
दूषणं चात्रापि पूर्ववदनुसरणीयमिति कर्तुं शक्यत्वादित्येतदपि साधनं
वाद्यसिद्धमेव । न खलु स .... .... विपर्ययोरपि कार्यत्वापत्तिः ।
विरुद्धत्वादिकं च दूषणमिहापि प्राग्वदभ्यूह्यम् । कारणादभिन्नत्वादि-
त्यपि साधनं न सत्कार्यवादपक्षमुत्थापयितुं समर्थम् । असिद्धत्वादि-
२० दोषदुष्टत्वात् । तथा हि—सर्वथा कार्यस्य कारणादभिन्नत्वमत्र हेतुत्वे-
नाभिमतं कथंचिद्वा । तत्राद्यपक्षे प्रतिवाद्यसिद्धत्वम् । हेतोः सिद्धत्वात् ।
द्वितीयपक्षे तु वाद्यसिद्धत्वम् । कारणात्कार्याणां कथंचिद्भेदस्य
कापिलैरप्रतिज्ञानात् । अपरं च दोषजालमिहापि प्रागिव स्याद्वादाने-
ष्णातमतिभिः स्वयमेव तर्कणीयम् । यानि च न पटस्तन्तुभ्यो भिद्यते
२५ तद्धर्मत्वादित्येवमादीनि कारणात्कार्यस्याभेदसाधनान्यनुमानानि परेषां
तान्य .... .... .... .... ....

प सर्वथैवाभेदः साध्यते तदा प्रत्यक्षबाधितत्वं पक्षदोषः संज्ञासंख्यास्वलक्षणादिविशेषेण कार्यकारणयोर्भेदस्यापि प्रत्यक्षेण प्रतीयमानत्वात् । कथंचिदभेदसाधने तु सिद्धसाध्यता कार्यकारणयोः कथंचिद्भेदस्य जैनैरभिमतत्वात् । यच्चान्यदुक्तम् ' असदुत्पद्यते ' इत्यत्रापि मते केयमसतामुत्पत्तिः सत्यसती वेत्यादि । तदप्येकान्तवादिनां दूषणम् । ५
न पुनरेकान्तकर्मावरणमुराक्षितबुद्धिशरीराणाम् । न खलु स्याद्वादिभिः सर्वथा सतोऽसतो वा कार्यस्योत्पत्तिः स्वीक्रियते । किं तर्हि कथंचित्सदेव सतः । तस्माच्चोपत्तिर्नैकान्ततो व्यतिरेकिणी काचिदस्तीति कथं तस्या न हि परिणामान्तरं स्वीकुर्वाणः पदार्थ उत्पन्न इत्यभिधीयते । प्रसाधितं चाधस्तादुत्पादव्ययध्रौव्यात्मकत्वं समस्तार्थानामित्यलमतिप्रसंगेन । किं च सत्कार्यवादाभ्युपगमे शास्त्रप्रणयनं हेतुप्रकाशनं च शिष्यान्प्रति भवतः किमर्थमिति कथनीयम् । संशयोच्छित्तिनिश्चयोत्पत्त्यर्थमिति चेत् । कथं तयोरुच्छित्त्युत्पत्ती स्याताम् । अथ हेतूपन्यासादिना संदेहस्य तिरोभावमात्रं विधीयते नात्यन्तमुच्छित्तिर्नाभावो विद्यते सत इति प्रतिज्ञानात् । निर्णयस्याप्याविर्भावमात्रं तेन क्रियते न पुनरविद्यमानस्योत्पत्तिर्नासतो विद्यते भाव इति स्वीकारादिति चेत । तदपि स्वरुचिविरचितदर्शनप्र .... .... १० १५

.... .... .... .... .... ....

च पुनः संशयाविर्भावप्रसक्तेः । तथा च पञ्चविंशतितत्त्वनिश्चयाभावाद्दत्तो मोक्षाय निवापाञ्जलिः[1] । एवं चेदमप्यसंगतम् । २०

**' पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे वसन् ।**
**जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः ॥'**

आविर्भावश्च सन्नसन्वा न संभवतीत्यभिहितमिति निर्णयस्याप्याविर्भावमात्रं तेन क्रियते .... .... .... ....
.... .... इत्याद्यपि परास्तम् । अथ शास्त्रप्रणयनसाधनप्रयोगयोः २५

---

१ निवापः–पितृदानम् ।

साफल्यार्थमसतो निर्णयस्योत्पत्तिः सतः संदेहस्य विनाशश्चाभ्युपगम्यते तर्हि '**नासतो विद्यते भावो नाभावो विद्यते सतः**'। इत्यादिवचः कथं न विरोधमास्कन्देत। कथं वा सत्कार्यवादसिद्धये प्राक्प्रयुक्तस्य क्रियमाणत्वादेर्हेतुपञ्चकस्यानेनैव व्यभिचारो न भवेत्। तदेवं प्रकृतिसद्भावस्य प्रकृतौ महदादिसद्भावस्य च कुतश्चिद्धेतोरप्रसिद्धेरनयोर्भेदाभेदप्रतिपादकं 'हेतुमदनित्यम्' इत्यादि, 'त्रिगुणमविवेकि' इत्यादि च कारिकाद्वयं सव्याख्यानं खपुष्पसौरसव्यावर्णनप्रख्यमित्येदप्युपेक्षणीयं प्रेक्षादक्षैः।

एवं च—

कापिलकुलशैलजालमेतद्भिश्चविलोडनलालसं किलासीत्।
दृढनयदम्भोलिपाततस्तच्चक्रे **जैनेन्द्रेण** भिन्नपक्षम् ॥ ६९४ ॥

तस्मान्मानेष्वशेषेष्वपि विषयतयानेकधर्मस्वभावो
भावग्रामः प्रवीणः प्रथत इति मुहुर्भावनीयं भवद्भिः ॥
एकान्तास्तु प्रणीताः **सुगतसुतमुखैर्ये** विनाशित्वमुख्याः
ख्यातिर्मानेषु तेषां गगननलिनवन्नावकाशं समेति॥ ६९५ ॥

यस्मात्प्रादुरभूदियं व्यवहृतिश्चित्रा नृणां मूलतः
तप्तं येन सुदुष्करं तप इह त्यक्त्वैव राज्यश्रियम् ॥
दिव्यज्ञानमहोदधौ त्रिभुवनं यस्यैकरत्नायते
कुर्यादीप्सितसिद्धिमेष भगवान् **श्रीनाभिराजाङ्गनः**॥६९६॥

नम्रानेकत्रिदशमुकुटश्लिष्टनानामणीनां
भाभिः कीर्णं कुवलयदलश्यामलं यस्य गात्रम् ॥
लक्ष्मीं व्योम्नः सुरपतिधनुःसंगिनः संचकर्ष
श्रीमानिष्टं स भुवनगुरुः **सुव्रतो** नस्तनोतु ॥ ६९७ ॥

वाग्वैभवं निरुपमा विभुता विभूतिः
शुभ्रांशुरश्मिपटली धवलं यशश्च।

1 छन्दोभङ्गो दृश्यते।

यस्याः प्रसादवशतः कृतिनां भवन्ति
सा भारती वितनुतां मम वाञ्छितानि ॥ ६९८ ॥

सौगन्ध्येन मनोरमे विकसिते पङ्करुहेऽवस्थितां
लक्ष्मीं नित्यमवेत्य संश्रितवती तत्स्पर्द्धया भारती ॥
शङ्के वक्त्रसरोरुहं निरुपमं येषां ममाभीप्सितं ५
श्रीमन्तो **मुनिचन्द्रसूरि**गुरवः कुर्वन्तु ते सर्वदा ॥ ६९९ ॥

इति **शास्त्रवार्तासमुच्चय**समुद्रसमुल्लासनपूर्णचन्द्र**श्रीमन्मुनिचन्द्र**-सूरिपादपद्मोपजीविना **श्रीदेवाचार्येण** विरचिते **स्याद्वादरत्नाकरे प्रमाणनयतत्त्वालोकालङ्कारे** विषयस्वरूपनिर्णयो नाम **पञ्चमः** परिच्छेदः ॥ ५ ॥ १०

**पञ्चमपरिच्छेदः समाप्तः ॥**

# शुद्धिपत्रकम् ।

| अशुद्धम् | शुद्धम् | पृ. | पं. |
|---|---|---|---|
| द्व्ययो | द्वयो | ७२७ | ६ |
| कल्प | कल्पा | ७२८ | १२ |
| न्तस्य | न्तरस्य | ७३२ | ११ |
| ऽसौ | रसौ | ७३४ | १५ |
| मूर्वं | मूर्वं | ७३५ | ७ |
| स्न | स्ते | ७३६ | ५ |
| पतृ | पत्तृ | ७३९ | ३ |
| ह्यत्त्य | ह्यस | ७४३ | १२ |
| घटः | घंटं | ७४४ | २० |
| घर्मो | धर्मो | ,, | २० |
| शक्य | ऽशक्य | ७४७ | १९ |
| निर्णी | र्निर्णी | ७४९ | ३ |
| नदन्ना | तन्ना | ,, | १० |
| यत | यम | ७५३ | ११ |
| शेष | शय | ७५५ | २४ |
| तैव | तैव | ७५७ | २६ |
| कुना | कुनो | ७५८ | ७ |
| माण | माणा | ७५८ | २० |
| लब्धिः | लब्धि | ७५९ | २० |
| राय | रया | ७५९ | २६ |
| तत्रव्य | तत्र व्य | ७६१ | ११ |
| एक | एक | ७६४ | २३ |
| न्य | द्न्य | ७६६ | १९ |
| एवं भू | एवंभू | ७६८ | ६ |
| न्तस्य | न्तरस्य | ७६८ | ६ |
| ऽर | र | ७७१ | २१ |
| त्रता | त्रतां | ७७३ | २० |
| द्धोध | द्बोध | ७७४ | २४ |
| वर्त | र्वर्त | ७७५ | २५ |
| बलः | वलः | ७७६ | ५ |
| | | ७९४ | २ |
| र्थस्थ | र्थस्य | ७७६ | १८ |
| भेद प्र | भेदप्र | ७७७ | २० |

| अशुद्धम् | शुद्धम् | पृ. | पं. |
|---|---|---|---|
| तत्र | तत्रे | ७७९ | २४ |
| शीलः | शीलाः | ७७९ | २५ |
| धीत | धीत | ७८० | २ |
| तीत | तीय | ७८० | २२ |
| पूर्ण | पूर्ण | ७८१ | ७ |
| क्षणी | क्षणा | ७८१ | १९ |
| ल्येत | ल्येत | ७८४ | २ |
| कदा | कादा | ७८८ | १९ |
| यर्था | यथा | ७९० | ९ |
| पवो | पयो | ७९५ | २१ |
| द्रव्वं | द्व्वं | ७९६ | २७ |
| विवि | विव | ७९८ | ५ |
| त्तथा | तथा | ७९८ | २६ |
| प्यैका | प्यानैका | ८०० | २३ |
| रैय | यैर | ८०१ | ५ |
| स्या र्थ | स्यार्थ | ८०१ | २४ |
| १ | २ | ८०२ | २७ |
| तां | ता | ८०३ | १० |
| य इत्थं त | ये इत्थ ते | ,, | २५ |
| भिन्न | भिन्ने | ,, | २६ |
| | | ८०४ | १६ |
| वृत्तैः | वृत्तेः | ८०४ | २ |
| वृत्त्यां | वृत्त्या | ८०६ | ७ |
| प्रत्व | प्रत्य | ८०९ | १५ |
| शिरः श्रव | शिरःश्रव | ८११ | १७ |
| तयोरूपा | तयो रूपा | ८१२ | १९ |
| पेक्षा | पेक्ष्या | ८१४ | २१ |
| सरः समु | सरःसमु | ८२३ | ७ |
| अयं पाठोऽत्र | अत्र | ८२४ | २६ |
| पतेः | पत्तेः | ८२५ | ५ |
| रूप | रुप | ८२६ | १९ |
| नैक | नेक | ८२८ | ३ |
| योगे | योग | ८३५ | २० |

| अशुद्धम् | शुद्धम् | पृ. | पं. |
|---|---|---|---|
| णाम | णामा | ८३७ | ९ |
| सवा | समवा | ८३९ | ३ |
| षेण | षण- | ८५० | ९ |
| माना | मान | ८५२ | १४ |
| तत्र | तत्र तत्र | ८५३ | १३ |
| डौजः प्र | डौजःप्र | ८६० | १ |
| काथि- | काथि | ८६२ | ११ |
| मत्वा | मत्त्वा | ८७३ | १६ |
| षट्के न | षट्केन | ८८५ | ५ |
| संन्या | सन्न्या | ८९२ | १४ |
| धइ | ध इ | ,, | २० |
| त्पाद | त्पाद- | ८९३ | ९ |
| प्रदेशा | प्रदेशाः | ८९३ | २२ |
| सुतः | सुप्ताः | ८९४ | २ |
| स्यांती | स्याती | ,, | १९ |
| गतत्त्वा | गतत्वा | ८९५ | २० |
| पङ्क्ः | षङ्क्ः | ८९६ | १४ |
| भावत्त्व | भावत्व | ८९७ | ९ |
| भिर्नो | भिन्नो | ९०५ | १३ |
| मनः सं | मनःसं | ९०९ | १८ |
| तेव | तैव | ९११ | ९ |
| विंश | विंश | ९१८ | २१ |
| कक | कैक | ९१९ | १३ |
| भीव | भवि | ९२२ | ६ |
| देर्याद्र | दयोर्द्रे | ९२२ | ९ |
| रपि- | रपि | ९२६ | १ |
| नारू | ना रू | ९२८ | १० |
| क्षुत्व | क्षुषत्व | ९२८ | २६ |
| अइ | इ | ९३३ | १२ |
| नास्या | नास्या- | ,, | २० |
| पेक्षा | पेक्षा- | ९३५ | ५ |
| किं प्र | किंप्र | ९३६ | ८ |
| त्पादि | त्पादादि | ९३७ | १५ |
| शात् | शात् । | ९४० | १५ |
| तत्रेव | तत्रैव | ९४३ | ६ |
| पेक्षि | पेक्ष | ९४५ | १७ |
| रोति | रोति । | ,, | २४ |
| दृष्ट | दृ | ९४६ | २ |
| व । | वय | ९४९ | ११ |
| प्रत्येया | प्रत्ययो | ९५० | १४ |
| कय | कम | ९५२ | ४ |
| व्यक्त | व्यक्ते | ९५३ | ७ |
| श्वव्य | श्वन्य | ९५३ | १६ |
| त्क्री | त्क्र | ९५४ | १० |
| कार | कर | ९५६ | २४ |
| क्तिग | क्ति | ९५७ | २० |
| स्तूनी | स्तुनी | ९५८ | ७ |
| धर्मे | धर्मैं | ,, | १५ |
| णस्य | णस्यत्व | ,, | १९ |
| बा | ब्रा | ९५९ | ८ |
| ताव | ताव- | ९५९ | २३ |
| धा | साधा | ९६० | २४ |
| त्पन्न | त्पन्नं | ९६७ | १४ |
| बन्धं: | बन्धः | ,, | १९ |
| न्या. कं. | ३ न्या. कं. | ९६७ | २६ |
| रेरा | रेतरा | ९६९ | २४ |